व्यतिरिक्तं किञ्चिद् द्रव्यमस्ति, कथञ्चिद् भेदे वा परस्याभ्युपेतबाधा स्यात्कारलाञ्छनार्थज्ञान-वचसो वा वादिनः सिद्धसाध्यतासमास्कन्दनात् सर्वमसमीचीनम् । न चान्धतमसादौ केवल-मृद्द्रव्यग्रहणमस्त्यभिहितन्यायात्, अपि च—

" द्रव्यं पर्यायवियुक्त ( त ? ), पर्याया द्रव्यवर्जिताः ।
क कदा केन किंरूपा, दृष्टा मानेन केन वा ? ॥"

नहि विशेषनिरपेक्षो ध्रौव्यांशः सामान्यलक्षणः कश्चिद् विद्यते यो गृह्येत केवलः, न च सामा-न्यनिरपेक्षः कश्चिद् विशेषो नाम विद्यते य इन्द्रियाणां गोचरतामापद्यते ॥ अथैवमाशङ्क्येथाः—न ब्रूमो नास्ति सामान्यांशः, स हि विद्यमानोऽपि ग्रहणकाले ग्रहीतुमशक्य इति विशेषमात्र-ग्रहणमेवेति, एवं तर्हि सामान्यांशः स्वशरीरविरहाद् विभावत्वाद् व्योमोत्पलादिवत् कुतो विशेष-ग्रहणम् ? । सामान्योपलम्भानुभवनिरोधश्च सामान्यशून्यविशेषमात्रग्रहणवादिनः । नापीन्द्रिय-विषयसङ्करः, चक्षुरादिज्ञानावरणकर्मक्षयोपशमविशेषात् तादृश एवासौ क्षयोपशमो येन सम-स्तान्येवेन्द्रियाण्येकसामान्यग्रहणे व्याप्रियन्ते, न पुनर्विशिष्टान्यान्यार्थग्रहणे, तथादृश्यमान-त्वात् । न चास्ति काचिद् युक्तिर्यद् विवक्षितं वस्तु सर्वथा वस्त्वन्तरेणासदृश स्वरूपेऽवस्थास्यते, सर्वप्रकारमतुल्यत्वाद् वन्ध्यासुतादिवत्, अतो भवान्त-रेण तुल्यताऽवश्यमभ्युपेया विवक्षितस्य वस्तुनः सत्त्वमिच्छता । तच्च सामान्यं ध्रौव्यलक्षणम् । न चैतद् बुद्धिपरिकल्पनामात्रे सामान्ये घटते, परिकल्पस्य वस्त्वसस्पर्शात् तादवस्थ्य दोषाणाम्, परिकल्पश्चाभूतोऽपि तत्त्वतो वस्तुष्वेव तादृशीं धियमुत्पादयति, नावस्तुषु वाजिविषाणादिष्विति । किमत्र कारणमुपादाय वस्तुविकल्पः प्रवर्तत इति चेत्, तदसत्, तस्य वस्तुनो वस्तुत्वेनानिर्धा-रितत्वान्नोपादानकारणता, न च सर्वथा वस्तुनः तुल्यतैव, यदि स्यात् ततो वैरूप्यशून्यत्वाद् वि-वक्षितं वस्तु वस्त्वन्तरादन्यदित्येष प्रत्ययो न स्यात्, केनचिदप्याकारेण भेदाभावात्, अतो भे-दमभिलषता प्रेक्षापूर्वकारिणा वैरूप्यमपि केनचिदाकारेणाभ्युपेयम्, एवं चेत् सामान्यविशेषस्व-भावं सर्वदा सर्वमेव वस्त्विति प्रतिपत्तव्यम् । न च सामान्यविशेषयोः स्वलक्षणभेदेऽप्यत्यन्त-भेदः, शबलरूपत्वात् वस्तुनश्च वस्तुतयाऽपि वस्त्वन्तरातुल्यत्वेऽन्यतरस्यावस्तुत्वप्रसङ्गात् तदवि-नाभावाच्च द्वितीयस्याप्यभाव इति सर्वशून्यं स्यात्, इष्यत एवेति चेत्, तदयुक्तम्, प्रमाणप्रमेय-प्रतिपाद्यप्रतिपादकसद्भावात् । सांवृत एष व्यवहार इति चेत्, तदप्यसत्, संवृतिः प्रमाणमप्र-माणं वा स्यात् ? यदि प्रमाणं ततो बाधकप्रमाणाभावात् परमार्थसत्त्वं प्रत्यक्षादिवत्, अथा-प्रमाणं संवृतिः ततो देवानांप्रियस्य व्यर्थः प्रयासः, प्रमाणप्रतीतिनिब-न्धनत्वात् प्रेक्षापूर्वकारिव्यवहाराणाम् । अथ सकलशून्यताप्रसङ्गभीत्या सा-मान्यविशेषयोस्तुल्यत्वमेव वस्तुतयाऽभ्युपेयते ततः सामान्यविषयस्वभावं सर्वमिति व्यपेतशङ्कं प्रतिपद्यस्व, परस्परं वा स्वभावविरहाभावात् सामान्यविशेषयोः सङ्कीर्णतायां

सामान्यसिद्धि

सामान्यविशेषरूपता

सत्यामपि धर्मभेदप्रसिद्धेः समस्तव्यवहारसम्प्रसिद्धिः, कारकशक्तिवत् । कारकशक्तयो ह्येकद्रव्यातिरिक्तत्वात् सङ्कीर्णा अपि कार्यभेदाद् भेदमनुपतन्त्य एवोपलभ्यन्ते विशिष्टव्यवहारहेतवः तद्वदत्रापि द्रष्टव्यम् । न च सामान्यविशेषव्यतिरिक्तः कश्चिदनयोः सामान्यविशेषयोराधारभूतो द्रव्यांशोऽपरः समस्ति परपरिकल्पितः, तुल्यातुल्यांशव्यतिरेकेणानुपलभ्यमानत्वाद् द्रव्यांशस्य, यदि तावदसावन्यस्माद् व्यावृत्ततयाऽवगम्यते ततो विशेष एव, अथानुवृत्तिद्वारेण परिच्छिद्यते सामान्यांशः स्यात्, न चान्यथा प्रत्ययप्रवृत्तिर्या द्रव्यमालम्बेत, अतो वस्त्वेकमनेकाकारम्, आकाराश्चानुवृत्तिप्रत्ययावसेयाः केचिदपरे तु व्यावृत्त्याकारबुद्ध्याऽध्यवसातव्या इति ॥ न चानश्य सतो भवितव्यमाधारेण, परिकल्प्य तावत् तस्यैव त्वत्परिकल्पितद्रव्यांशस्य क आधारः ? को वा व्योमादेरित्यलं प्रसङ्गेन । व्यवस्थितमिदमुभयस्वभावं सकलम् । तस्मान्न केवलस्य क्वचिदस्ति मृद्द्रव्यस्य ग्रहणम्, उपपद्यते चायमभेदप्रत्ययः, न च भ्रान्तः, सामान्यांशालम्बनत्वाद्, अतः सर्वं साधु स्याद्वादप्रक्रियायाम् । एतेन रूपादिसमुदयविषय स्मार्तमभेदज्ञानमिति प्रत्युक्तम्, उभयस्वभावत्वाद् वस्तु सत् सामान्यांशालम्बनभेदज्ञानम्, न पुनः सामान्यशून्यरूपादिभेदसमुदयमात्रालम्बनम्, समुदायस्य तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वेनानिर्धार्यमाणस्वभावस्यापारमार्थिकत्वात् । यदप्युक्तं—"तेष्वेव हि तन्त्वादिषु तथासन्निविष्टेषु पट इत्यादिबुद्धिः प्रवर्तते, यथा भक्तसिक्थोदकेषु तथासन्निविष्टेषु काञ्जिकबुद्धिः" इति, कथं पुनः सन्निविष्टेष्विति निरूप्यम् ॥ ननु च पटाद्याकारेणेति किमत्र निरूप्यते ? क्व पुनरसावन्यत्र पटः प्रसिद्धो यस्याकारेण तन्तवः सन्निविशन्ते, यथा पार्थाकारोऽभिमन्युरिति, कश्चाय सन्निवेशः ? यदि संस्थानमेव वृत्त-त्र्यस्र-चतुरस्रा-यत परिमण्डलभेदमिष्यते युग्मा-युग्म-प्रतर घनविकल्पकम्, एवं सति प्रागस्माभिः प्रत्यपादि प्रपञ्चतः सङ्घातभेदेभ्य उत्पद्यन्ते स्कन्धास्तद्भावलक्षणपरिणामवशात्, स च तादृशः परमार्थतोऽस्त्येव समुदायः, अथान्यः कोऽपि समुदायः, स निरूपणीयः, काञ्जिकाद्यपि परिणामान्तरापत्त्यैव सिद्धमार्हतानाम्, न भक्तसिक्थादिमात्रतया । यच्चोक्तम्— 'रूपाद्यग्रहे घटादिबुद्धेरभावात्" इति, एतदपि जैनान् प्रति न किञ्चित्, उभयस्वभावत्वाद् वस्तुनो विभागाभावात्, रूपादिस्वरूपोल्लेखेनैव सामान्यांशः प्रतीयते, वह्निरूपस्पर्शपरिणतायोगोलकवत्, तथा वनपिण्डत्र्यादयोऽपि सन्निवेशविशेषाः पुद्गलानां सामान्यविशेषस्वभावाः समासादितक्रमपरिणतयः तत्त्वतोऽभ्युपेयन्ते, नोपादायप्रज्ञप्तिमात्रम्, यदि च संस्थानमर्थान्तरं रूपादिभ्यस्तदपि परमार्थसत् ततो रूपादिवदन्यानपेक्षमेव गृह्येत, अथ रूपस्पर्शमात्रम्, एवं तर्हि तदनेकं रूपस्पर्शवत् प्रसक्तम्, एवं चानिष्टप्राप्तेरसमञ्जसता, यदि रूपसन्निवेशविशेषो वृत्त स्पर्शनेन न गृह्येत विषयत्वाद् रूपवत्, न वा स्पर्शविशेष चक्षुषा गृह्येतोक्तन्यायात्, भेदे च द्वे वृत्ते गृह्येयातामन्यत्वाद् रूपस्पर्शवत्, एवं तन्त्वादिषु तथास्थितत्वादि विचार्यमाणं विशी

१ 'प्रसिद्धे' इति क-ख पाठ । २ 'सालम्बतो वस्तु' इति क-पाठ । ३ 'क्वचिदपरे' इति क ख-पाठ । ४ 'नोपादेय' इति क ख-पाठ ।

व्यतिरिक्तं किञ्चिद् द्रव्यमस्ति, कथञ्चिद् भेदे वा परस्याभ्युपेतबाधा स्यात्कारलाञ्छनार्थज्ञानवचसो वा वादिनः सिद्धसाध्यतासमास्कन्दनात् सर्वमसमीचीनम्। न चान्धतमसादौ केवलमृद्द्रव्यग्रहणमस्त्यभिहितन्यायात्, अपि च—

" द्रव्यं पर्यायवियुक्त ( त ? ), पर्याया द्रव्यवर्जिताः।
क कदा केन किंरूपा, दृष्टा मानेन केन वा ? ॥"

नहि विशेषनिरपेक्षो ध्रौव्यांशः सामान्यलक्षणः कश्चिद् विद्यते यो गृह्येत केवल', न च सामान्यनिरपेक्षः कश्चिद् विशेषो नाम विद्यते य इन्द्रियाणा गोचरतामापद्यते ॥ अथैवमाशङ्केथाः— न ब्रूमो नास्ति सामान्यांशः, स हि विद्यमानोऽपि ग्रहणकाले ग्रहीतुमशक्य इति विशेषमात्रग्रहणमेवेति, एव तर्हि सामान्यांशः स्वशरीरविरहाद् विभावत्वाद् व्योमोत्पलादिवत् कुतो विशेषग्रहणम् ?। सामान्योपलम्भानुभवविरोधश्च सामान्यशून्यविशेषमात्रग्रहणवादिनः। नापीन्द्रियविषयसङ्करः, चक्षुरादिज्ञानावरणकर्मक्षयोपशमविशेषात् तादृश एवासौ क्षयोपशमो येन समस्तान्येवेन्द्रियाण्येकसामान्यग्रहणे व्याप्रियन्ते, न पुनर्विशिष्टान्यान्यार्थग्रहणे, तथादृश्यमानत्वात्। न चास्ति काचिद् युक्तिर्यद् विवक्षितं वस्तु सर्वथा वस्त्वन्तरेणासदृशं स्वरूपेऽवस्थास्यते, सर्वप्रकारमतुल्यत्वाद् वन्ध्यासुतादिवत्, अतो भवान्तरेण तुल्यताऽवश्यमभ्युपेया विवक्षितस्य वस्तुन' सत्त्वमिच्छता। तच्च सामान्य ध्रौव्यलक्षणम्। न चैतद् बुद्धिपरिकल्पनामात्रे सामान्ये घटते, परिकल्पस्य वस्त्वसस्पर्शात् तादवस्थ्य दोषाणाम्, परिकल्पश्चाभूतोऽपि तत्त्वतो वस्तुष्वेव तादृशी धियमुत्पादयति, नावस्तुषु वाजिविषाणादिष्विति। किमत्र कारणमुपादाय वस्तुविकल्पः प्रवर्तत इति चेत्, तदसत्, तस्य वस्तुनो वस्तुत्वेनानिर्धारितत्वान्नोपादानकारणता, न च सर्वथा वस्तुनः तुल्यतैव, यदि स्यात् ततो वैरूप्यशून्यत्वाद् विवक्षित वस्तु वस्त्वन्तरादन्यदित्येष प्रत्ययो न स्यात्, केनचिदप्याकारेण भेदाभावात्, अतो भेदमभिलपता प्रेक्षापूर्वकारिणा वैरूप्यमपि केनचिदाकारेणाभ्युपेयम्, एव चेत् सामान्यविशेषस्वभाव सर्वदा सर्वमेव वस्त्विति प्रतिपत्तव्यम्। न च सामान्यविशेषयोः स्वलक्षणभेदेऽप्यत्यन्तभेदः, शबलरूपत्वात् वस्तुनश्च वस्तुतयाऽपि वस्त्वन्तरातुल्यत्वेऽन्यतरस्यावस्तुत्वप्रसङ्गात् तदविनाभावाच्च द्वितीयस्याप्यभाव इति सर्व शून्य स्यात्, इष्यत एवेति चेत्, तदयुक्तम्, प्रमाणप्रमेयप्रतिपाद्यप्रतिपादकसद्भावात्। सांवृत एष व्यवहार इति चेत्, तदप्यसत्, संवृतिः प्रमाणमप्रमाण वा स्यात् ? यदि प्रमाण ततो बाधकप्रमाणाभावात् परमार्थसत्त्व प्रत्यक्षादिवत्, अथाप्रमाण संवृति' ततो देवानांप्रियस्य व्यर्थ' प्रयास', प्रमाणप्रतीतिनिबन्धनत्वात् प्रेक्षापूर्वकारिव्यवहाराणाम्। अथ सकलशून्यताप्रसङ्गभीत्या सामान्यविशेषयोस्तुल्यत्वमेव वस्तुतयाऽभ्युपेयते तत सामान्यविषयस्वभावं सर्वमिति व्यपेतशङ्क प्रतिपद्यस्व, परस्पर वा स्वभावविरहाभावात् सामान्यविशेषयोः सङ्कीर्णतायां

सामान्यसिद्धि

सामान्यविशेषरूपता

ज्यमानत्वात्, पटपरिणामकाले च द्रव्यात्मना तन्तुसद्भावात् पर्यायात्मना चाभावात्, सर्वेषामवयवावयविसमुदायसमुदायिगुणगुणिनामन्यत्वानन्यत्वमुभयनयापेक्षमेवाभिरूपधियो धिनोति, तस्मादनेकान्तवादिनः सूक्ष्मबादरप्रतिघाताप्रतिघातभेदमङ्घातकार्यकारणैकत्वान्यत्वादिविश्वप्रकारपरिणाममभ्युपयतो न किञ्चिदनवद्यमाढौकते ॥ एतेन द्रव्यपर्यायनयद्वयव्यावर्णनेन किमेकोऽवयवी स्वारम्भकावयवेषु प्रत्यवयवं वर्तते आहोस्विद् एकदेशेनेत्येषोऽपि विकल्पः सिद्धसाध्यतादिबहुदोषत्वादपास्तो वेदितव्यः, तस्मान्न व्यतिरिक्तोऽवयव्यस्ति निभाल्यमानः, समस्ति च द्रव्यांशः स्थितिलक्षणोऽन्वयी, तदपेक्षावुत्पादविनाशौ स्तः, अतः स्थित्युत्पादविनाशस्वभावमेव सर्वमर्थक्रियासमर्थ,न स्थितिनिरपेक्षावुत्पादविनाशाविति । यदप्युक्तम्-कल्पनामात्रं कारणं कार्यमिति प्रतीत्य प्रत्ययमात्रत्वात्, तदप्ययुक्तम्, करोतीति कारणं कार्यान्तरनिर्वर्तनसमर्थम्, क्रियायाः कारणान्तरापेक्षात्, कल्पना च बहिरङ्गार्थशून्यं विज्ञानमात्रं शब्दमात्रं वा, न च तस्य घटादिकार्यान्तरनिष्पादने शक्तिरस्ति, न च विज्ञानमात्रमेव ग्राह्यग्राहकलक्षणमर्थशून्यमस्तीति प्रतिपत्तुं शक्यम्, प्रमाणाभावात्, न च भ्रान्तिमात्रं कार्यकारणव्यवस्था, भ्रान्तिबीजाभावात्, नापि शून्यता, प्रतिषेधप्रतिषेध्यादिसद्भावात् । व्यवहारतः सत्त्वमर्थानां न परमार्थत इति चेत् प्रतिषेधोऽपि तर्हि व्यवहारमात्रत्वादसन्नित्यप्रतिहतसद्भावात् कथं न भावा भवेयुः ? न च रासभशृङ्गमसत् स्वतः परिकल्पितेन रूपेण मृत्खननादिकार्यार्थमाचेष्टमानमिष्टं दृष्टं वा ॥

दीर्घता च यदि स्वतोऽसती ह्रस्वबुद्धेः कारणं भवत्येवं सति व्योमारविन्दकर्णिकाऽपि हेतुरसत्त्वात् स्याद् ह्रस्वताबुद्धेः, यदि चासत्प्रतीत्याऽसदेवोत्पद्येत तथा सति शशविषाणं प्रतीत्य खरविषाणमपि स्यात्, अथास्त्येव वस्तुनो दीर्घता, न तर्हि प्रतीत्यप्रत्ययमात्रं सर्वम्, सतीमेव दीर्घतामाश्रित्य ह्रस्वताधियोऽभ्युपगमात् दीर्घह्रस्वबुद्ध्योश्चायौगपद्यादयुक्ता प्रतीत्यसमुत्पत्तिः, न चासतः कारणभावः, यदि च सर्वं प्रतीत्यैव सिद्ध्यति नाप्रतीत्य, ततः प्रतीत्यसिद्धिरपि प्रतीत्यसिद्धिप्रभावाऽभ्युपेया, तथा चाभ्युपगमविरोधः, तस्मादस्ति ध्रौव्यांशलक्षणात् द्रव्यसत्ता, नापेक्ष्यसिद्धा, कारणमिति या व्यपदिश्यते, कारणसिद्धौ च कार्यसिद्धिरपि तदविनाभावात्, अन्यथा कारणतैव न स्यादसम्भावितत‌द्गुणत्वात्, पर्यायास्तूत्पादादयः केचिदपेक्ष्यसिद्धाः प्रयोगजाः पटादयः, केचिदनपेक्ष्यसिद्धा स्वाभाविकाः परमाणुनीलताभ्रेन्द्रचापविद्युदादयः, एवं च स्वरूपसिद्धेः कारणकार्यप्रत्ययाप्रसदर्थविषयौ न भवत इति सिद्धम् ॥

दीर्घ-ह्रस्वत्वसिद्धि

भाष्याक्षरानुसरणमधुना समातन्यते-उत्पादश्च व्ययश्च उत्पादव्ययौ, समस्यैकत्वेन निर्दिष्टौ, ध्रुवतीति ध्रुवं-शाश्वतं तद्भावो ध्रौव्यं-स्थिरता, उत्पादव्ययध्रौव्याणि, युक्तं योगः-समुदायः सत् अस्तीति सद्, विद्यमानमित्यर्थः । एतदुक्तं भवति-उत्पादादयो नैकका[1] सत्, किं तर्हि ? युक्तं

उत्पादादिपदानामर्थं

1 'पभ्युपेयवे इति क-पाठ ।

र्यते, तस्मादस्ति द्रव्य तद्भावाव्ययलक्षणं स्थित्यात्मकमन्वयिरूपत्वात् स्वभेदानां प्राक् तदान्वयिन्योश्च(?) मृदन्वयाविच्छेदादेकम्, न पुना रूपादिसमुदायमात्रम्, अतः सर्वैकान्तध्वंसविधायिनि स्याद्वादे दुर्गमपास्तमसद्विकल्पचतुष्टयम्, किं तत्, एवं समूहिनः परिणामिनो वा तत्कार्यमुत नैव तत्कार्यमथ कार्यमेवास्ति न कारणं कारणमेव वा विद्यते न कार्यमिति, एष च सामूहिकः समस्तोऽपि रत्नावलीपटस्तम्भकुम्भसेनावनयूथादिरर्थः स्वसमये पारिणामिक एव, भिन्नाभिन्नदेशानां परिणामिनां परिणामाभ्युपगमात्, तथापि भेदेनोपन्यासो लोकव्यवहारानुवृत्त्या, पूर्वधर्मोपमर्देनोत्तरधर्मोत्पादः परिणामो लोके क्षीरदध्यादिवत् समूहिषु पारिणामिषु चानैकान्तव्याप्तिप्रपञ्चप्रदर्शनार्थः। तथाहि—आलोकविशिष्टरूपग्रहणमपि नात्यन्तभेदप्रतिपत्तये, विशेषणविशेष्यभावश्चैकान्तभेदविषयो न कश्चित् प्रसिद्ध', दण्डयादावपि सामान्यविशेषभावे सति विशेषणविशेष्यभावात्। यच्चोक्तमवधारण रूपादिग्रहे सत्येव भावात्, तदप्युभयस्वभाववस्त्वभ्युपगमे न कञ्चनापक्षा(?)लमावहति। यदप्यारेकां प्रमाणानुभवमन्तरेण स्मृतिरनुपपन्नेति पश्चात् परिजिहीर्षताऽभ्यधायि विकल्पितेऽपि ह्यर्थे स्मृतिर्दृष्टेति, तदप्यसत्, अर्थाभिधानप्रत्ययाना वस्तुत्वाभ्युपगमादत्यन्ताभावस्य च निरुपाख्यस्य[1] प्रतिषिद्धत्वात्, सर्वप्रकारमभतः सन्व्यवहारायोग्यत्वात्, बभूवुरनादौ ससारे बन्धुमत्यादयः प्राणिविशेषास्तदभिधानानि तदालम्बनाश्च प्रत्ययाः, ततश्च प्रमाणानुभवपूर्विकैव स्मृतिः सर्वत्र नान्यथा, समुदायस्य च प्रतिपादितवस्तुत्वान्न निर्मूलविकल्पत्वम्, बुद्धिभेदाच्चान्यत्वमेकान्तत एवेति पूर्वमेव प्रत्यस्तम्। नहि बुद्धिभिदा सर्वप्रकाराऽस्ति जैनेन्द्राणा, द्रव्यास्तिकनयाभिप्रायेण ग्रहणात्, सद्द्रव्यतया भेदाभावात्, पर्यायतः सङ्ख्यापरिमाणाकारभेदसद्भावात् भिन्नाभिन्नस्वभावैव शेमुषी, सा च भेदाभेदस्वभाव एव वस्तुनि व्यापारमासादयन्ती स्वात्मप्रतिष्ठां प्रतिलभत इति न किञ्चिदनिष्टम्। यच्चोक्तम्—"तुलानतिविशेषाग्रहणादनन्योऽवयव्यवयवेभ्य"[2] इति, तदिष्टमेव, अन्यत्वस्य सर्वथा निषिध्यमानत्वात्, यतो विनाऽप्यवयविना सयोगमात्रे तदर्थान्तरभूतसङ्घातपरिणामाद् दशपलपरिमाणत्वमस्त्येवेति, अतो नावयविकृत पलदशकस्य दशपलपरिमाणत्वं, विनाऽपि तेनोपलभ्यमानत्वादेकादशपलेनेव, इतश्चावयवव्यतिरेकेणामन्नवयवी, अनभिभूतगुणत्वे सत्यत्रयवरूपादिव्यतिरेकेणानुपलभ्यमानरूपादिगुणत्वात्, तुरगवारणाद्यवयवव्यतिरेकेण सेनावत्। यदि च स्याद् रूपादयोऽपि च गुणा गृह्येरन्नवयविन पृथक्त्वेन, घटबदरादिवदिति व्यतिरेकः, विशेषणोपादानाद् विद्यमानेष्वभिभवादनुपलभ्यमानगुणत्व तारकादिषु दृष्टमित्यनैकान्तिकत्वव्यावृत्ति', द्रव्यात्मना च तन्तुपरिणतौ पटपरिणामोऽस्त्येव, सुचिरादपि तत्र भावात्, पर्यायात्मना चाभावाद्, अतीतानागतपरिणामानामसत्त्वादव्यवहार्यत्वाद् वर्तमानपर्याय एव परमार्थतोऽस्त्युपयु-

कार्यकारणानेकान्तत्वम्

अवयविनोऽनन्यत्वम्

१ 'निरूपाख्य' इति क पाठ। २ 'ग्रहणाभाव्या' इति क-ख पाठः।

ज्यमानत्वात्, पटपरिणामकाले च द्रव्यात्मना तन्तुसद्भावात् पर्यायात्मना चाभावात्, सर्वेषामवयवावयविसमुदायसमुदायिगुणगुणिनामन्यत्वानन्यत्वमुभयनयापेक्षमेवाभिरूपधियो धिनोति, तस्मादनेकान्तवादिनः सूक्ष्मबादरप्रतिघाताप्रतिघातभेदसङ्घातकार्यकारणकृत्वान्यत्वादिविश्वप्रकारपरिणाममभ्युपयतो न किञ्चिदनवद्यमाढौकते ॥ एतेन द्रव्यपर्यायनयद्वयव्यावर्णनेन किमेकोऽवयवी स्वारम्भकावयवेषु प्रत्यवयवं वर्तते आहोस्विद् एकदेशेनेत्येषोऽपि विकल्पः सिद्धसाध्यतादिबहुदोषत्वादपास्तो वेदितव्यः, तस्मान्न व्यतिरिक्तोऽवयव्यस्ति निभाल्यमानः, समस्ति च द्रव्यांशः स्थितिलक्षणोऽन्वयी, तदपेक्षावुत्पादविनाशौ स्तः, अतः स्थित्युत्पादविनाशस्वभावमेव सर्वमर्थक्रियासमर्थं,न स्थितिनिरपेक्षावुत्पादविनाशाविति । यदप्युक्तम्—कल्पनामात्रं कारणं कार्यमिति प्रतीत्य प्रत्ययमात्रत्वात्, तदप्ययुक्तम्, करोतीति कारणं कार्यान्तरनिर्वर्तनसमर्थम्, क्रियायाः कारणान्तरापेक्षात्, कल्पना च बहिरङ्गार्थशून्यं विज्ञानमात्रं शब्दमात्रं वा, न च तस्य घटादिकार्यान्तरनिष्पादने शक्तिरस्ति, न च विज्ञानमात्रमेव ग्राह्यग्राहकलक्षणमर्थशून्यमस्तीति प्रतिपत्तुं शक्यम्, प्रमाणाभावात्, न च भ्रान्तिमात्रं कार्यकारणव्यवस्था, भ्रान्तिबीजाभावात्, नापि शून्यता, प्रतिषेधप्रतिषेध्यादिसद्भावात् । व्यवहारतः सत्त्वमर्थानां न परमार्थत इति चेत् प्रतिषेधोऽपि तर्हि व्यवहारमात्रत्वादसन्नित्यप्रतिहतसद्भावात् कथं न भावा भवेयुः? न च रासभशृङ्गमसत् स्वतः परिकल्पितेन रूपेण मृत्खननादिकार्योर्थमाचेष्टमानमिष्टं दृष्टं वा ॥

दीर्घता च यदि स्वतोऽसती ह्रस्वबुद्धेः कारणं भवत्येवं सति व्योमारविन्दकर्णिकाऽपि हेतुरसत्त्वात् स्याद् ह्रस्वताबुद्धेः[1], यदि चासत्प्रतीत्याऽसदेवोत्पद्येत तथा सति शशविषाणं प्रतीत्य खरविषाणमपि स्यात्, अथास्त्येव वस्तुनो दीर्घता, न तर्हि प्रतीत्यप्रत्ययमात्रं सर्वम्, सतीमेव दीर्घतामाश्रित्य ह्रस्वताधियोऽभ्युपगमात् दीर्घह्रस्वबुद्ध्योश्चायौगपद्यादयुक्ता प्रतीत्यसमुत्पत्तिः, न चासतः कारणभावः, यदि च सर्वं प्रतीत्यैव सिद्ध्यति नाप्रतीत्य, ततः प्रतीत्यसिद्धिरपि प्रतीत्यसिद्धिप्रभावाऽभ्युपेया, तथा चाभ्युपगमविरोधः, तस्मादस्ति ध्रौव्यांशलक्षणात् द्रव्यसत्ता, नापेक्ष्यसिद्धा, कारणमिति या व्यपदिश्यते, कारणसिद्धौ च कार्यसिद्धिरपि तदविनाभावात्, अन्यथा कारणतैव न स्यादसम्भावितत्तद्गुणत्वात्, पर्यायास्तूत्पादादयः केचिदपेक्ष्यसिद्धाः प्रयोगजाः पटादयः, केचिदनपेक्ष्यसिद्धाः स्वाभाविकाः परमाणुनीलताश्रेन्द्रचापविद्युदादयः, एवं च स्वरूपसिद्धेः कारणकार्यप्रत्ययावसदर्थविषयौ न भवत इति सिद्धम् ॥

दीर्घ-ह्रस्वत्व-सिद्धि

भाष्याक्षरानुसरणमधुना समातन्यते—उत्पादश्च व्ययश्च उत्पादव्ययौ, समस्यैकत्वेन निर्दिष्टौ, ध्रुवतीति ध्रुवं—शाश्वतं तद्भावो ध्रौव्यं—स्थिरता, उत्पादव्ययध्रौव्याणि, युक्तं योगः—समुदायः सत् अस्तीति सद्, विद्यमानमित्यर्थः । एतदुक्तं भवति—उत्पादादयो नैकका[1] सत्, किं तर्हि? युक्त

उत्पादादि-पदानामर्थः

1 'पभ्युपेयते' इति क-पाठः ।

र्यते, तस्मादस्ति द्रव्य तद्भावाव्ययलक्षणं स्थित्यात्मकमन्वयिरूपत्वात् स्वभेदानां प्राक् तदान्वयिन्योश्व(?) मृदन्वयाविच्छेदादेकम्, न पुना रूपादिसमुदायमात्रम्, अतः सर्वैकान्तध्वंसविधायिनि स्याद्वादे दूरमपास्तमसद्विकल्पचतुष्टयम्, किं तत्, एवं समूहिनः परिणामिनो वा तत्कार्यमुत नैव तत्कार्यमथ कार्यमेवास्ति न कारणं कारणमेव वा विद्यते न कार्यमिति, एष च सामूहिकः समस्तोऽपि रत्नावलीपटस्तम्भकुम्भसेनावनयूथादिरर्थः स्वसमये पारिणामिक एव, भिन्नाभिन्नदेशानां परिणामिनां परिणामाभ्युपगमात्, तथापि भेदेनोपन्यासो लोकव्यवहारानुवृत्त्या, पूर्वधर्मोपमर्देनोत्तरधर्मोत्पादः परिणामो लोके क्षीरदध्यादिवत् समूहिषु पारिणामिषु चानैकान्तव्यामिश्रप्रपञ्चप्रदर्शनार्थं । तथाहि—आलोकविशिष्टरूपग्रहणमपि नात्यन्तभेदप्रतिपत्तये, विशेषणविशेष्यभावश्चैकान्तभेदविषयो न कश्चित् प्रसिद्ध, दण्डयादावपि सामान्यविशेषभावे सति विशेषणविशेष्यभावात् । यच्चोक्तमवधारण रूपादिग्रहे सत्येव भावात्, तदप्युभयस्वभाववस्त्वभ्युपगमे न कञ्चनापक्षा(?)लमावहति । यदप्यारेका प्रमाणानुभवमन्तरेण स्मृतिरनुपपन्नेति पश्चात् परिजिहीर्षताऽभ्यधायि विकल्पितेऽपि ह्यर्थे स्मृतिर्दृष्टेति, तदप्यसत्, अर्थाभिधानप्रत्ययानां वस्तुत्वाभ्युपगमादत्यन्ताभावस्य च निरुपाख्यस्य[1] प्रतिषिद्धत्वात्, सर्वप्रकारमतः सव्यवहारायोग्यत्वात्, बभूवुरनादौ संसारे बन्धुमत्यादयः प्राणिविशेषास्तदभिधानानि तदालम्बनाश्च प्रत्ययाः, ततश्च प्रमाणानुभवपूर्विकैव स्मृतिः सर्वत्र नान्यथा, समुदायस्य च प्रतिपादितवस्तुत्वान्न निर्मूलविकल्पत्वम्, बुद्धिभेदाच्चान्यत्वमेकान्तत एवेति पूर्वमेव प्रत्यस्तम् । नहि बुद्धिभिदा सर्वप्रकाराऽस्ति जैनेन्द्राणा, द्रव्यास्तिकनयाभिप्रायेण ग्रहणात्, सद्द्रव्यतया भेदाभावात्, पर्यायतः सङ्ख्यापरिमाणाकारभेदसद्भावात् भिन्नाभिन्नस्वभावैव शेमुषी, सा च भेदाभेदस्वभाव एव वस्तुनि व्यापारमासादयन्ती स्वात्मप्रतिष्ठां प्रतिलभत इति न किञ्चिदनिष्टम् । यच्चोक्तम्—"तुलानतिविशेषाग्रहणादनन्योऽवयव्यवयवेभ्य" इति, तदिष्टमेव, अन्यत्वस्य सर्वथा निषिध्यमानत्वात्, यतो विनाऽप्यवयविना संयोगमात्रे तदर्थान्तरभूतसङ्घातपरिणामाद् दशपलपरिमाणत्वमस्त्येवेति, अतो नावयविकृत पलदशकस्य दशपलपरिमाणत्व, विनाऽपि तेनोपलभ्यमानत्वादेकादशपलेनेव, इतश्चावयवव्यतिरेकेणामन्नवयवी, अनभिभूतगुणत्वे सत्यवयवरूपादिव्यतिरेकेणानुपलभ्यमानरूपादिगुणत्वात्, तुरगवारणाद्यवयवव्यतिरेकेण सेनावत् । यदि च स्याद् रूपादयोऽपि च गुणा गृह्येरन्नवयविन पृथक्त्वेन, घटबदरादिवदिति व्यतिरेकः, विशेषणोपादानाद् विद्यमानेष्वभिभवादनुपलभ्यमानगुणत्व तारकादिषु दृष्टमित्यनैकान्तिकत्वव्यावृत्ति[2], द्रव्यात्मना च तन्तुपरिणतौ पटपरिणामोऽस्त्येव, सुचिरादपि तत्र भावात्, पर्यायात्मना चाभावाद्, अतीतानागतपरिणामानामसत्त्वादव्यवहार्यत्वाद् वर्तमानपर्याय एव परमार्थतोऽस्त्युपयु-

कार्यकारणानेकान्तत्वम्

अवयविनोऽनन्यत्वम्

१ 'निरूपाख्य' इति क पाठ । २ 'ग्रहणाभ्रान्त्या' इति क-ख-पाठः ।

ध्रुवं तत् सत्। अतोऽन्यदसदिति ॥ यदुत्पद्यते इत्यादि। यदिति सामान्यमात्राभिधायिना सर्वनाम्ना धर्मास्तिकायादिपञ्चरूपरिग्रहः परस्परापेक्षाः समुदिता एवोत्पादादयः सल्लक्षयन्ति, तत्र द्रव्यनयाभिप्रायेणाकारान्तराविर्भावमात्रमुत्पाद औपचारिकः, परमार्थतो न किञ्चिदुत्पद्यते सततमवस्थितद्रव्यांशमात्रत्वात्, तथा व्ययः-तिरोभावलक्षणः, पूर्वावस्थायास्तिरोधानं विनाशः, यतो द्रव्यमेव तथा तथा विवर्तमानमुत्पादविनाशव्यवस्थया व्यपदिश्यते, प्रज्ञायते च पूर्वक्षणोच्छेदेन क्षणान्तरात्मलाभ उत्पादपर्यायस्य, तस्यैव क्षणस्य निरन्वयोच्छेदिता विनाशः, द्रव्यास्तिकस्य ध्रौव्यमन्वयी सामान्यांशः, पर्यायस्योपचारात्, सन्तानमात्रं ध्रौव्यशब्दाभिधेयमेकः सन्तानस्तद्बलेन च प्रत्यभिज्ञादिप्रसिद्धिः, तदेतत् त्रितयमपि प्रतिपादयत्युभयनयसङ्गत्या वस्तुसज्ज्ञानप्रतिपत्तये, न ध्रौव्यमुत्पादव्ययशून्यं केनचित् प्रमाणेन गोचरीकर्तुं शक्यते, नाप्युत्पादव्ययौ सामान्यांशवियुताविति, यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सद् विद्यते तदस्तीति, सामर्थ्यादिदमापन्नम्-अतोऽन्यदसदिति, अत इत्युत्पादादिसमुदितस्वभावाद् यदन्यत् तदसत्, तच्च किं? समुदायादपकृष्ट एकक उत्पादो वा विनाशो वा ध्रौव्यं वा उत्पादविनाशौ वा उत्पादध्रौव्ये वा, विनाशध्रौव्ये वा, इतरनिरपेक्षस्य तादृशांशस्याभावादसद्विषयत्वमसद्व्यवहारप्रतिनियता चेति नानुपाख्योऽसच्छब्दवाच्यः, शब्दव्यवहारायोग्यत्वात् ॥ ननु च द्रव्यपर्यायनयौ स्वतन्त्रत्वात् द्वावपि विजिगीषू स्वविषयोपमर्दं परस्परं न सहेते, ततश्च पुनरपि सीमन्तितमेव वस्तु न वस्तुतायामवतिष्ठेतेति। उच्यते-पर्यायनयस्य तावदुत्पादव्ययलक्षणस्य स्वातन्त्र्यं नास्ति द्रव्यास्तिकेनाङ्कुशितत्वात्। नह्युत्पादो नाम कश्चिद् धर्मोऽस्त्यभूतभवनात्मकः, स चोत्पादो द्विधा कल्प्येत-प्रायोगिको वैस्रसिकश्च, प्रायोगिकः पुरुषकारनिर्वर्त्यः, सोऽपि द्विधा-अनभिसन्धिकृतोऽभिसन्धिकृतश्च, तत्राद्यः कायवाक्स्वान्तभेदेन पञ्चदशप्रकारः, ते च कायादयः समुदायात्मकाः, समुदायश्चासन् सार्थरथचक्रादिवत्, स्वाङ्गसमुदायमात्रत्वान्न सार्थो नाम कश्चित् परमार्थतोऽस्ति, रथो वा पुरुषकूबरादिव्यतिरिक्तः, स चाभावत्वात् सार्थरथादिः कथमुत्पद्येत ? एवं कायादयोऽपि पुद्गलसमुदायरूपाः, समूहश्च समूहिमात्रमतस्तत्रापि न कस्यचिदुत्पादः, कायादेः परमार्थतोऽसत्त्वात्, अभिसन्धिपूर्वकस्तूत्पादः कायादियोगात् समग्रवास्यादिकरणापेक्षात् स्तम्भकुम्भादीनां प्रेक्षापूर्वकारिपुरुषक्रियानन्यत्वात् प्रयोगजः, सोऽप्येवमेव समुदायविषयः समुदायश्चासत्त्वादेव नोत्पद्यत इत्युत्पादाभाव एव, अन्वयांशनिरपेक्षत्वान्न प्रायोगिक उत्पादः सम्भवतीत्यर्थः। वैस्रसिकोऽपि नास्त्युत्पादः, विस्रसेति स्वभाववचनसंज्ञाशब्दः, स्वाभाविको वैस्रसिकः, तत्र धर्माधर्मव्योमात्मपुद्गलद्रव्याणामिमा वृत्तयो यथाक्रमं स्थितिगत्यवगाहोपयोगस्पर्शशब्दादिलक्षणाः स्वसद्भावाः, नहि तेषां धर्मादीनां गत्यादयो धर्माः पर्याया वा भवन्ति, यदि भवेयुस्त-

उत्पादादेर्भेदा (margin note beside "वैस्रसिकश्च ... ते च कायादयः")

१ 'वासादि' इति क पाठः।

योगः–परस्परापेक्षः समुदाय एवोत्पादादीनां, न सदित्यस्य ध्वनेर्विषयः, यथा दृष्टा सर्वे समुदिता एव नैकाः, एवमुत्पादव्ययध्रौव्याणि योगः सदिति, अथवा समाध्यर्थस्य युजेर्युक्त–समाहित त्रिस्वभाव सत् उत्पादव्ययध्रौव्याण्येव त्रयः स्वभावाः सम्यगाहिताः–परस्परप्रतिबद्धाः सदिति। अन्ये तूत्पादव्ययध्रौव्यैर्युक्तमिति गृह्णते, किं पुनस्तदुत्पादादिभिर्युक्तमिति निरूपणीयम्, उत्पादादित्रयव्यतिरेकेण द्रव्याभावाच्च विघ्नः किं तद् युज्यमानमुत्पादादिभिः। अपरे समाधानमाक्षेपस्याभिदधते ॥ युक्तं विशेष्यते उत्पादव्ययध्रौव्यैः समुदितैर्यो योगस्तद् युक्त सत्, नान्याभ्यामुत्पादव्ययाभ्यामित्यादिको योग. सदिति, योगश्च सामान्येनोत्पादादीनामनादिर्विशेषविवक्षया सादिः, ध्रौव्य चेति पृथक् प्राधान्यख्यापनाय सामान्यस्य भाष्यकृतोदचारि, यतः सत्यन्वयांशे तदाश्रयावुत्पादविनाशौ सङ्गच्छेते, अन्यथा कस्योत्पादः ? कस्य चानुत्पन्नस्य तेनाकारेण व्ययः ? ॥ अपरे तु ध्रौव्यं चेत्यसमस्ततामन्यथा वर्णयन्ति—

त्रैलक्षण्ये सतः सादिः, कथ सन्न त्रिलक्षणम् ।
ध्रौव्य तल्लक्षणत्वेन, द्रव्यार्थेन त्रिषूदितम् ॥ १ ॥
अत एव पृथग् वृत्तौ, ध्रौव्य चेति प्रदर्शितम् ।
सत त्रिरूप त्रय त्वेतत्, सम्भवेन विकल्पते ॥ २ ॥
आद्ययोर्नियमादन्त्य–मन्त्ये तु भजनाऽऽद्ययोः ।
स्वतः परनिमित्तौ तु, स्यातामप्युपचारतः ॥ ३ ॥
अस्ति नोत्पद्यते चैक–मेकमुत्पद्यतेऽस्ति च ।
नास्ति चोत्पद्यते चैक, नास्ति नोत्पद्यते परम् ॥ ४ ॥
आकाशपरमाणू च, प्रदीपान्त्यशिखादि च ।
आकाशकुसुम चेति, चतुष्टयमुदाहृतम् ॥ ५ ॥

सङ्क्षेपतः कारिकापञ्चकस्यायमर्थः—पुद्गलजीवेषूत्पादव्ययोरन्यादृशत्वाद् ध्रौव्यस्य पञ्चत्वेऽप्यविशेषाद् वृत्तौ पृथग् विवरणम्, अन्यथा धर्माधर्माकाशेष्वधिगमोपायविषयत्वेनोत्पादप्रच्युती, अन्यथा च जीवपुद्गलेष्विति द्रव्यक्षेत्रकालभावापेक्षात्, अन्यथा प्रयोगजावुत्पादव्ययौ, अन्यथा च धर्मास्तिकायादिषु द्रव्यस्वभावापेक्षमप्रयोगजौ ज्ञानविषयत्वोत्पादप्रच्युतिमात्रलक्षणौ, नहि तेषु पौरुषेयो विस्रसा वा प्रयोग क्रमत इति, अत परप्रत्ययावुत्पादविनाशौ त्रयाणाम्, जीवपुद्गलानां तु प्रयोगविस्रसाभ्यामुत्पादव्ययौ सम्भवत, ध्रौव्य तु सर्वेष्वविशिष्टम्, एतत् सतो लक्षण क्वचिदुपचारत क्वचित् परमार्थत इति, तदेतत् पौर्वापर्येणालोच्य कृतप्रज्ञैरागमज्ञैरेव व्याख्यास्यते निर्विरोध, वय तत्रानिपुणा. किञ्चिदेवस्थूलकुशलतयाऽभिदध्महे—चशब्द समुचितौ वर्तते, तेनोत्पादादय प्रत्येक सतो लक्षण, किं तर्हि ? समुदिता एव वस्तुतत्त्व भवन्तीति, एतमेवार्थमुत्तरेण भाष्येण प्रदर्शयति—यदुत्पद्यते यद् व्येति यच्च

ध्रुवं तत् सत्। अतोऽन्यदसदिति ॥ यदुत्पद्यते इत्यादि । यदिति सामान्यमात्राभिधायिना सर्वनाम्ना धर्मास्तिकायादिपञ्चकपरिग्रहः, परस्परापेक्षा' समुदिता एवोत्पादादयः सल्लक्षयन्ति, तत्र द्रव्यनयाभिप्रायेणाकारान्तराविर्भावमात्रमुत्पाद औपचारिकः, परमार्थतो न किञ्चिदुत्पद्यते सततमवस्थितद्रव्यांशमात्रत्वात् , तथा व्ययः–तिरोभावलक्षणः, पूर्वावस्थायास्तिरोधानं विनाशः, यतो द्रव्यमेव तथा तथा विवर्तमानमुत्पादविनाशव्यवस्थया व्यपदिश्यते, प्रज्ञायते च पूर्वक्षणोच्छेदेन क्षणान्तरात्मलाभ उत्पादपर्यायस्य, तस्यैव क्षणस्य निरन्वयोच्छेदिता विनाशः, द्रव्यास्तिकस्य ध्रौव्यमन्वयी सामान्यांशः, पर्यायस्योपचारात्, सन्तानमात्रं ध्रौव्यशब्दाभिधेयमेकः सन्तानस्तद्बलेन च प्रत्यभिज्ञादिप्रसिद्धिः, तदेतत् त्रितयमपि प्रतिपादयत्युभयनयसङ्गत्या वस्तुसद्भावप्रतिपत्तये, न ध्रौव्यमुत्पादव्ययशून्यं केनचित् प्रमाणेन गोचरीकर्तुं शक्यते, नाप्युत्पादव्ययौ सामान्यांशवियुताविति, यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सद् विद्यते तदस्तीति, सामर्थ्यादिदमापन्नम्–अतोऽन्यदसदिति, अत इत्युत्पादादिसमुदितस्वभावाद् यदन्यत् तदसत्, तच्च किं? समुदायादपकृष्ट एकक उत्पादो वा विनाशो वा ध्रौव्यं वा उत्पादविनाशौ वा उत्पादध्रौव्ये वा, विनाशध्रौव्ये वा, इतरनिरपेक्षस्य तादृशांशस्याभावादसद्विषयत्वमसद्व्यवहारप्रतिबन्धिता चेति नानुपाख्योऽसच्छब्दवाच्यः, शब्दव्यवहारायोग्यत्वात् ॥ ननु च द्रव्यपर्यायनयौ स्वतन्त्रत्वात् द्वावपि विजिगीषू स्वविषयोपमर्दं परस्परं न सहेते, ततश्च पुनरपि सीमन्तितमेव वस्तु न वस्तुतायामवतिष्ठेतेति । उच्यते–पर्यायनयस्य तावदुत्पादव्ययलक्षणस्य स्वातन्त्र्यं नास्ति द्रव्यास्तिकेनाङ्कुशितत्वात् । नह्युत्पादो नाम कश्चिद् धर्मोऽस्त्यभूतभवनात्मकः, स चोत्पादो द्विधा कल्प्येत–प्रायोगिको वैस्रसिकश्च, प्रायोगिकः पुरुषकारनिर्वर्त्यः, सोऽपि द्विधा–अनभिसन्धिकृतोऽभिसन्धिकृतश्च, तत्राद्यः कायवाक्स्वान्तभेदेन पञ्चदशप्रकारः, ते च कायादयः समुदायात्मकाः, समुदायश्चासन् सार्थरथचक्रादिवत्,

उत्पादादेर्भेदाः

स्वाङ्गसमुदायमात्रत्वान्न सार्थो नाम कश्चित् परमार्थतोऽस्ति, रथो वा पुरुषकूवरादिव्यतिरिक्तः, स चाभावत्वात् सार्थरथादिः कथमुत्पद्येत ? एवं कायादयोऽपि पुद्गलसमुदायरूपाः, समूहश्च समूहिमात्रमतस्तत्रापि न कस्यचिदुत्पादः, कायादेः परमार्थतोऽसत्त्वात्, अभिसन्धिपूर्वकस्तूत्पादः कायादियोगात् समग्रवास्यादिकरणापेक्षात् स्तम्भकुम्भादीनां प्रेक्षापूर्वकारिपुरुषक्रियाजन्यत्वात् प्रयोगजः, सोऽप्येवमेव समुदायविषयः समुदायश्चासत्त्वादेव नोत्पद्यत इत्युत्पादाभाव एव, अन्वयांशनिरपेक्षत्वान्न प्रायोगिक उत्पादः सम्भवतीत्यर्थः । वैस्रसिकोऽपि नास्त्युत्पादः, विस्रसेति स्वभाववचनसञ्ज्ञाशब्दः, स्वाभाविको वैस्रसिकः, तत्र धर्माधर्मव्योमात्मपुद्गलद्रव्याणामिमा वृत्तयो यथाक्रमं स्थितिगत्यवगाहोपयोगस्पर्शशब्दादिलक्षणाः स्वसद्भावा', नहि तेषां धर्मादीनां गत्यादयो धर्माः पर्याया वा भवन्ति, यदि भवेयुस्त्व-

1 ' वासादि ' इति क-पाठः ।

योगः–परस्परापेक्षः समुदाय एवोत्पादादीनां, न सदित्यस्य ध्वनेर्विषयः, यथा **त्रयो वर्णाः** समुदिता एव नैकशः, एवमुत्पादव्ययध्रौव्याणि योगः सदिति, अथवा **समाध्यर्थस्य** युजेर्युक्त–समाहित त्रिस्वभाव सत् उत्पादव्ययध्रौव्याण्येव त्रयः स्वभावाः सम्यगाहिताः–परस्परप्रतिबद्धाः सदिति । अन्ये तूत्पादव्ययध्रौव्यैर्युक्तमिति गृह्णते, किं पुनस्तदुत्पादादिभिर्युक्तमिति निरूपणीयम्, उत्पादादित्रयव्यतिरेकेण द्रव्याभावान्न विद्मः किं तद् युज्यमानमुत्पादादिभिः । अपरे समाधानमाक्षेपस्याभिदधते ॥ युक्त मिशेष्यते उत्पादव्ययध्रौव्यैः समुदितैर्यो योगस्तद् युक्तं सत्, नान्याभ्यामुत्पादव्ययाभ्यामित्यादिको योगः सदिति, योगश्च सामान्येनोत्पादादीनामनादिर्विशेषविवक्षया सादिः, ध्रौव्य चेति पृथक् प्राधान्यख्यापनाय सामान्यस्य भाष्यकृतोदचारि, यतः सत्यन्वयांशे तदाश्रयावुत्पादविनाशौ सङ्गच्छेते, अन्यथा कस्योत्पादः ? कस्य चानुत्पन्नस्य तेनाकारेण व्ययः ? ॥ अपरे तु ध्रौव्यं चेत्यसमस्ततामन्यथा वर्णयन्ति—

त्रैलक्षण्ये सतः सादिः, कथं सन्न त्रिलक्षणम् ।
ध्रौव्य तल्लक्षणत्वेन, द्रव्यार्थेन त्रिघूदितम् ॥ १ ॥
अत एव पृथग् वृत्तौ, ध्रौव्य चेति प्रदर्शितम् ।
सत त्रिरूप त्रय त्वेतत्, सम्भवेन विकल्पते ॥ २ ॥
आद्ययोर्नियमादन्त्य–मन्त्ये तु भजनाऽऽद्ययोः ।
स्वतः परनिमित्तौ तु, स्यातामप्युपचारतः ॥ ३ ॥
अस्ति नोत्पद्यते चैक–मेकमुत्पद्यतेऽस्ति च ।
नास्ति चोत्पद्यते चैक, नास्ति नोत्पद्यते परम् ॥ ४ ॥
आकाशपरमाणु च, प्रदीपान्त्यशिखादि च ।
आकाशकुसुम चेति, चतुष्टयमुदाहृतम् ॥ ५ ॥

सङ्क्षेपतः कारिकापञ्चकस्यायमर्थः—पुद्गलजीवेषूत्पादव्यययोरन्यादृशत्वाद् ध्रौव्यस्य पञ्चत्वेऽप्यविशेषाद् वृत्तौ पृथग् विवरणम्, अन्यथा धर्माधर्माकाशेष्वधिगमोपायविषयत्वेनोत्पादप्रच्युती, अन्यथा च जीवपुद्गलेष्विति द्रव्यक्षेत्रकालभावापेक्षात्, अन्यथा प्रयोगजावुत्पादव्ययौ, अन्यथा च धर्मास्तिकायादिषु द्रव्यस्वभावापेक्षमप्रयोगजौ ज्ञानविषयत्वोत्पादप्रच्युति मात्रलक्षणौ, नहि तेषु पौरुषेयो विस्रसा वा प्रयोग क्रमत इति, अत. परप्रत्ययावुत्पादविनाशौ त्रयाणाम्, जीवपुद्गलानां तु प्रयोगविस्रसाभ्यामुत्पादव्ययौ सम्भवतः, ध्रौव्य तु सर्वेष्वविशिष्टम्, एतत् सतो लक्षण कचिदुपचारत कचित् परमार्थत इति, तदेतत् पौर्वापर्यणालोच्य कृतप्रज्ञैरागमज्ञैरेव व्याख्यास्यते निर्विरोध, वय तत्रानिपुणा. किञ्चिदेवस्थूलकुशलतयाऽभिदध्महे–चशब्द. समुचितौ वर्तते, तेनोत्पादादय प्रत्येक सतो लक्षण, किं तर्हि ? समुदिता एव वस्तुतत्त्व भवन्तीति, एनमेवार्थमुत्तरेण भाष्येण प्रदर्शयति—**यदुत्पद्यते यद् व्येति यच्च**

ध्रुवं तत् सत्। अतोऽन्यदसदिति ॥ यदुत्पद्यते इत्यादि। यदिति सामान्यमात्राभिधायिना सर्वनाम्ना धर्मास्तिकायादिपञ्चकपरिग्रहः, परस्परापेक्षा' समुदिता एवोत्पादादयः सल्लक्षयन्ति, तत्र द्रव्यनयाभिप्रायेणाकारान्तराविर्भावमात्रमुत्पाद औपचारिकः, परमार्थतो न किञ्चिदुत्पद्यते सततमवस्थितद्रव्यांशमात्रत्वात्, तथा व्ययः-तिरोभावलक्षणः, पूर्वावस्थायास्तिरोधान विनाशः, यतो द्रव्यमेव तथा तथा विवर्तमानमुत्पादविनाशव्यवस्थया व्यपदिश्यते, प्रज्ञायते च पूर्वक्षणोच्छेदेन क्षणान्तरात्मलाभ उत्पादपर्यायस्य, तस्यैव क्षणस्य निरन्वयोच्छेदिता विनाशः, द्रव्यास्तिकस्य ध्रौव्यमन्वयी सामान्यांशः, पर्यायस्योपचारात्, सन्तानमात्रं ध्रौव्यशब्दाभिधेयमेक. सन्तानस्तद्बलेन च प्रत्यभिज्ञादिप्रसिद्धिः, तदेतत् त्रितयमपि प्रतिपादयत्युभयनयसङ्गत्या वस्तुसद्भावप्रतिपत्तये, न ध्रौव्यमुत्पादव्ययशून्यं केनचित् प्रमाणेन गोचरीकर्तुं शक्यते, नाप्युत्पादव्ययौ सामान्यांशवियुताविति, यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सद् विद्यते तदस्तीति, सामर्थ्यादिदमापन्नम्-अतोऽन्यदसदिति, अत इत्युत्पादादिसमुदितस्वभावाद् यदन्यत् तदसत्, तच्च किं? समुदायादपकृष्ट एकक उत्पादो वा विनाशो वा ध्रौव्यं वा उत्पादविनाशौ वा उत्पादध्रौव्ये वा, विनाशध्रौव्ये वा, इतरनिरपेक्षस्य तादृशांशस्याभावादसद्विषयत्वमसद्व्यवहारप्रतिबन्धिता चेति नानुपाख्योऽसच्छब्दवाच्य, शब्दव्यवहारायोग्यत्वात् ॥ ननु च द्रव्यपर्यायनयौ स्वतन्त्रत्वात् द्वावपि विजिगीषू स्वविषयोपमर्द परस्परं न सहेते, ततश्च पुनरपि सीमन्तितमेव वस्तु न वस्तुतायामवतिष्ठेतेति। उच्यते-पर्यायनयस्य तावदुत्पादव्ययलक्षणस्य स्वातन्त्र्यं नास्ति द्रव्यास्तिकेनाङ्कुशितत्वात्। नह्युत्पादो नाम कश्चिद् धर्मोऽस्त्यभूतभवनात्मकः, स चोत्पादो द्विधा कल्प्येत-प्रायोगिको वैस्रसिकश्च, प्रायोगिकः पुरुषकारनिर्वर्त्यः, सोऽपि द्विधा-अनभिसन्धिकृतोऽभिसन्धिकृतश्च, तत्राद्य' कायवाक्स्वान्तभेदेन पञ्चदशप्रकारः, ते च कायादय समुदायात्मकाः, समुदायश्चासन् सार्थरथचक्रादिवत्, स्वाङ्गसमुदायमात्रत्वान्न सार्थो नाम कश्चित् परमार्थतोऽस्ति, रथो वा पुरुषकूवरादिव्यतिरिक्तः, स चाभावत्वात् सार्थरथादिः कथमुत्पद्येत ? एवं कायादयोऽपि पुद्गलसमुदायरूपाः, समूहश्च समूहिमात्रमतस्तत्रापि न कस्यचिदुत्पादः, कायादे' परमार्थतोऽसत्त्वात्, अभिसन्धिपूर्वकस्तूत्पादः कायादियोगात् समग्रवास्यादिकरणापेक्षात् स्तम्भकुम्भादीनां प्रेक्षापूर्वकारिपुरुषक्रियाजन्यत्वात् प्रयोगज', सोऽप्येवमेव समुदायविषयः समुदायश्चासत्त्वादेव नोत्पद्यत इत्युत्पादाभाव एव, अन्वयांशनिरपेक्षत्वान्न प्रायोगिक उत्पादः सम्भवतीत्यर्थः। वैस्रसिकोऽपि नास्त्युत्पादः, विस्रसेति स्वभाववचनसञ्ज्ञाशब्द., स्वाभाविको वैस्रसिकः, तत्र धर्माधर्मव्योमात्मपुद्गलद्रव्याणामिमा वृत्तयो यथाक्रमं स्थितिगत्यवगाहोपयोगस्पर्शशब्दादिलक्षणाः स्वसद्भावा., नहि तेषां धर्मादीनां गत्यादयो धर्मा. पर्याया वा भवन्ति, यदि भवेयुस्त्व-

उत्पादादेर्भेदा

1 'वासादि' इति क-पाठ ।

योगः–परस्परापेक्षः समुदाय एवोत्पादादीनां, न सदित्यस्य ध्वनेर्विषयः, यथा वृक्षा वनं समुदिता एव नैकशः, एवमुत्पादव्ययध्रौव्याणि योगः सदिति, अथवा समाध्यर्थस्य युजेर्युक्त–समाहित त्रिस्वभाव सत् उत्पादव्ययध्रौव्याण्येव त्रयः स्वभावाः सम्यगाहिताः–परस्परप्रतिबद्धाः सदिति। अन्ये तूत्पादव्ययध्रौव्यैर्युक्तमिति गृह्णते, किं पुनस्तदुत्पादादिभिर्युक्तमिति निरूपणीयम्, उत्पादादित्रयव्यतिरेकेण द्रव्याभावान्न विद्म. किं तद् युज्यमानमुत्पादादिभिः। अपरे समाधानमाक्षेपस्याभिदधते ॥ युक्तं विशेष्यते उत्पादव्ययध्रौव्यैः समुदितैर्यो योगस्तद् युक्त सत्, नान्याभ्यामुत्पादव्ययाभ्यामित्यादिको योग. सदिति, योगश्च सामान्येनोत्पादादीनामनादिर्विशेषविवक्षया सादिः, ध्रौव्य चेति पृथक् प्राधान्यख्यापनाय सामान्यस्य भाष्यकृतोदचारि, यतः सत्यन्वयांशे तदाश्रयावुत्पादविनाशौ सङ्गच्छेते, अन्यथा कस्योत्पादः ? कस्य चानुत्पन्नस्य तेनाकारेण व्ययः ? ॥ अपरे तु ध्रौव्यं चेत्यसमस्ततामन्यथा वर्णयन्ति—

त्रैलक्षण्ये सतः सादिः, कथ सन्न त्रिलक्षणम् ।
ध्रौव्य तल्लक्षणत्वेन, द्रव्यार्थेन त्रिधूदितम् ॥ १ ॥
अत एव पृथग् वृत्तौ, ध्रौव्य चेति प्रदर्शितम् ।
सत त्रिरूप त्रय त्वेतत्, सम्भवेन विकल्पते ॥ २ ॥
आद्ययोर्नियमादन्त्य–मन्त्ये तु भजनाऽऽद्ययोः ।
स्वतः परनिमित्तौ तु, स्यातामप्युपचारतः ॥ ३ ॥
अस्ति नोत्पद्यते चैक–मेकमुत्पद्यतेऽस्ति च ।
नास्ति चोत्पद्यते चैक, नास्ति नोत्पद्यते परम् ॥ ४ ॥
आकाशपरमाणु च, प्रदीपान्त्यशिखादि च ।
आकाशकुसुम चेति, चतुष्टयमुदाहृतम् ॥ ५ ॥

सङ्क्षेपतः कारिकापञ्चकस्यायमर्थ —पुद्गलजीवेषूत्पादव्यययोरन्यादृशत्वाद् ध्रौव्यस्य पञ्चत्वेऽप्यविशेषाद् वृत्तौ पृथग् विवरणम्, अन्यथा धर्माधर्माकाशेष्वधिगमोपायविषयत्वेनोत्पादप्रच्युती, अन्यथा च जीवपुद्गलेष्विति द्रव्यक्षेत्रकालभावापेक्षात्, अन्यथा प्रयोगजावुत्पादव्ययौ, अन्यथा च धर्मास्तिकायादिषु द्रव्यस्वभावापेक्षमप्रयोगजौ ज्ञानविषयत्वोत्पादप्रच्युतिमात्रलक्षणौ, नहि तेषु पौरुषेयो विस्रसा वा प्रयोग' क्रमत इति, अत' परप्रत्ययावुत्पादविनाशौ त्रयाणाम्, जीवपुद्गलानां तु प्रयोगविस्रसाभ्यामुत्पादव्ययौ सम्भवत', ध्रौव्य तु सर्वेष्वविशिष्टम्, एतत् सतो लक्षणं क्वचिदुपचारत क्वचित् परमार्थत इति, तदेतत् पौर्वापर्येणालोच्य कृतप्रज्ञैरागमज्ञैरेव व्याख्यास्यते निर्विरोध, वय तत्रानिपुणा किञ्चिदेवस्थूलकुशलतयाऽभिदध्महे–चशब्द' समुच्चितौ वर्तते, तेनोत्पादादय प्रत्येक सतो लक्षण, किं तर्हि ? समुदिता एव वस्तुतत्त्व भवन्तीति, एनमेवार्थमुत्तरेण भाष्येण प्रदर्शयति—यदुत्पद्यते यद् व्येति यच्च

ध्रुवं तत् सत्। अतोऽन्यदसदिति ॥ यदुत्पद्यते इत्यादि। यदिति सामान्यमात्राभिधायिना सर्वनाम्ना धर्मास्तिकायादिपञ्चकपरिग्रहः, परस्परापेक्षा समुदिता एवोत्पादादयः सल्लक्षयन्ति, तत्र द्रव्यनयाभिप्रायेणाकारान्तराविर्भावमात्रमुत्पाद औपचारिकः, परमार्थतो न किञ्चिदुत्पद्यते सततमवस्थितद्रव्यांशमात्रत्वात्, तथा व्ययः–तिरोभावलक्षणः, पूर्वावस्थायास्तिरोधानं विनाशः, यतो द्रव्यमेव तथा तथा विवर्तमानमुत्पादविनाशव्यवस्थया व्यपदिश्यते, प्रज्ञायते च पूर्वक्षणोच्छेदेन क्षणान्तरात्मलाभ उत्पादपर्यायस्य, तस्यैव क्षणस्य निरन्वयोच्छेदिता विनाशः, द्रव्यास्तिकस्य ध्रौव्यमन्वयी सामान्यांशः, पर्यायस्योपचारात्, सन्तानमात्रं ध्रौव्यशब्दाभिधेयमेकः सन्तानस्तद्बलेन च प्रत्यभिज्ञादिप्रसिद्धिः, तदेतत् त्रितयमपि प्रतिपादयत्युभयनयसङ्गत्या वस्तुसद्भावप्रतिपत्तये, न ध्रौव्यमुत्पादव्ययशून्यं केनचित् प्रमाणेन गोचरीकर्तुं शक्यते, नाप्युत्पादव्ययौ सामान्यांशवियुताविति, यदुत्पद्यते यद् व्येति यच्च ध्रुवं तत् सद् विद्यते तदस्तीति, सामर्थ्यादिदमापन्नम्–अतोऽन्यदसदिति, अत इत्युत्पादादिसमुदितस्वभावाद् यदन्यत् तदसत्, तच्च किं? समुदायादपकृष्ट एकक उत्पादो वा विनाशो वा ध्रौव्यं वा उत्पादविनाशौ वा उत्पादध्रौव्ये वा, विनाशध्रौव्ये वा, इतरनिरपेक्षस्य तादृशांशस्याभावादसद्विषयत्वमसद्व्यवहारप्रतिबन्धिता चेति नानुपाख्योऽसच्छब्दवाच्यः, शब्दव्यवहारायोग्यत्वात् ॥ ननु च द्रव्यपर्यायनयौ स्वतन्त्रत्वात् द्वावपि विजिगीषू स्वविषयोपमर्दं परस्परं न सहेते, ततश्च पुनरपि सीमन्तितमेव वस्तु न वस्तुतायामवतिष्ठेतेति। उच्यते–पर्यायनयस्य तावदुत्पादव्ययलक्षणस्य स्वातन्त्र्यं नास्ति द्रव्यास्तिकेनाङ्कुशितत्वात्। नह्युत्पादो नाम कश्चिद् धर्मोऽस्त्यभूतभवनात्मकः, स चोत्पादो द्विधा कल्प्येत–प्रायोगिको वैस्रसिकश्च, प्रायोगिकः पुरुषकारनिर्वर्त्यः, सोऽपि द्विधा–अनभिसन्धिकृतोऽभिसन्धिकृतश्च, तत्राद्यः कायवाक्स्वान्तभेदेन पञ्चदशप्रकारः, ते च कायादयः समुदायात्मकाः, समुदायश्चासन् सार्थरथचक्रादिवत्,

उत्पादादेर्भेदा

स्वाङ्गसमुदायमात्रत्वान्न सार्थो नाम कश्चित् परमार्थतोऽस्ति, रथो वा पुरुषकूवरादिव्यतिरिक्तः, स चाभावत्वात् सार्थरथादिः कथमुत्पद्येत ? एवं कायादयोऽपि पुद्गलसमुदायरूपाः, समूहश्च समूहिमात्रमतस्तत्रापि न कस्यचिदुत्पादः, कायादेः परमार्थतोऽसत्त्वात्, अभिसन्धिपूर्वकस्तूत्पादः कायादियोगात् समग्रवास्यादिकरणापेक्षात् स्तम्भकुम्भादीनां प्रेक्षापूर्वकारिपुरुषक्रियाजन्यत्वात् प्रयोगजः, सोऽप्येवमेव समुदायविषयः समुदायश्चासत्त्वादेव नोत्पद्यत इत्युत्पादाभाव एव, अन्वयांशनिरपेक्षत्वान्न प्रायोगिक उत्पादः सम्भवतीत्यर्थः। वैस्रसिकोऽपि नास्त्युत्पादः, विस्रसेति स्वभाववचनसञ्ज्ञाशब्दः, स्वाभाविको वैस्रसिकः, तत्र धर्माधर्मव्योमात्मपुद्गलद्रव्याणामिमा वृत्तयो यथाक्रमं स्थितिगत्यवगाहोपयोगस्पर्शशब्दादिलक्षणाः स्वसद्भावाः, नहि तेषां धर्मादीनां गत्यादयो धर्माः पर्याया वा भवन्ति, यदि भवेयुस्त-

१ 'वासादि' इति क-पाठः।

तस्तेषामेतद् विलक्षणमन्यदेव रूपं स्याद् गत्याद्युत्पादसद्भावे, न चान्यद् रूप लक्ष्यते भुजगप्रसारणाकुण्डलिकतोत्फणनिफणादिवत्, फणिनो हि स्वभावभूताकृतकसंस्थानान्तराभिव्यक्तिमात्रत्वात् प्राग्फणिरूपानन्यत्वात् तद् द्रव्यावस्थानात् कुत उत्पादः ? किं हि तत्रोत्पन्नं विद्यमानं वा नाभिव्यक्तमित्यत उत्पादाभाव एव, इत्येव धर्मादीनामपि गत्यादीनामुत्पादाभावः स्वरूपावस्थानान्तरमात्रत्वाज्जलतरङ्गतुहिनपटलादिवत्, कुतः स्वाभाविक उत्पादः ? । न चोत्पादस्यान्यः प्रकारो विद्यत इति, तस्मान्नैवास्त्युत्पादः । एव द्रव्यपर्यायनयद्वयापेक्षमस्तित्वमुत्पादस्य नास्तित्व च भावितमात्मपुद्गलद्रव्यविषयम् ॥ अथाकाशधर्माधर्मेष्वविक्रियात्मकेषूत्पादस्याभावात् कुतस्तत्रोत्पादानेकान्त इति ? । उच्यते-तेष्वपि स्वाभाविक उत्पादः समुदायजनितः एकत्विकश्च द्विप्रकारोऽप्यस्ति भजनया । यथैव ह्यात्मन्यौपशमिकादीनां भावानामात्मन एव तेन तेनाकारेण वृत्तिरुत्पादः, स्पर्शादीनामणुषु, स्पर्शशब्दादीना च स्कन्धेषु स्वाभाविक उत्पादस्तथा व्योमादिष्ववगाहगतिस्थितयो व्योमादिस्वभावास्तेषा परिणामाः, त एव ह्याकाशादयोऽवगाहाद्याकारेणोत्पन्नाः, तस्य चावगाहादेरुत्पादस्य प्रदेशरूपता यथाऽऽत्मनोऽसङ्ख्याताः प्रदेशास्तत्समुदायश्चात्मा भवति, आकाशस्य चाकाशत्व स्वाभाविकमकृत्रिममेव, यस्तस्यावगाहोत्पादोऽसावप्यकृत्रिमत्वात् स्वाभाविक एव, यस्मादाकाशं शुषिरमवकाशदातृत्वस्वभावम्, तथा धर्माधर्मौ गतिस्थित्यनुग्रहहेतुस्वभावौ, आत्माऽपि ज्ञानात्मकत्वादुपयोगस्वभावः, पुद्गलाश्च मूर्तित्वात् स्पर्शादिस्वभावाः । एवमवगाहादेरुत्पादस्य स्यात् स्वाभाविकत्वम्, तथा स्यादस्वाभाविकत्व समुदायकार्यत्वात् । यथा पटो भूयसा तन्तूना समुदायेन जन्यते, अवगाहादेरपि यथोक्त उत्पाद' समुदायजन्यत्वादस्वाभाविकः । यस्मादवगाहोऽवगाह्यावगाहकद्वयसमुदायात्मकः, गतिरपि गन्तृधर्मद्रव्यद्वयसमुदायात्मिका, स्थितिरपि स्थात्रधर्मद्रव्यद्वयसमुदायस्वभावा, उपयोगो विज्ञातृज्ञेयसमुदायात्मकः, स्पर्शादयोऽपि स्पर्शनादिस्पृश्यादिसमुदायात्मकाः, तस्मात् समुदायात्मकत्वात् स्यादस्वाभाविक', समुदायनिरपेक्षाणामेषामवगाहादीनामभावादेव स्यात् समुदायकृतः स्यादेकत्विकः, कथम् ? उत्पादो ह्यवगाहस्याकाशेऽवगाहकानुप्रवेशे व्यक्तिः, सा च व्यक्तिर्व्योमन्येव नान्यत्रापि, तस्य तु व्यञ्जकमेवावगाहक नोत्पादकम्, व्यञ्जकं चाकाशादन्यदेव भवति, व्यङ्ग्याद् घटादेरिव प्रदीपादि, ततश्चावगाहस्यैकत्विक उत्पादः, स्यादनैकत्विक' प्राक् प्रतिपादितवत्, ततश्च नभोऽवगाहोऽप्यनित्य एव गुणत्वात् पत्रनीलतावत्, नभसोऽवगाहत्वलक्षणमुपकार', स चावगाढारमन्तरेण जीव पुद्गल वा नाभिव्यज्यत इति अवगाढजीवादिसयोगमात्रमवगाह इति सिद्धम् । सयोगश्चोत्पादी सयुज्यमानवस्तुजन्यत्वात् द्व्यङ्गुलसयोगवत्, यथा चावगाह आकाशस्यैव गतिस्थित्युपयोगरूपादयो गतिमदादिद्रव्यसयोगमात्रत्वादुत्पादादिस्वभावा इति सर्वेऽप्युत्पादविगमध्रुवस्वभावा इत्यर्थ' । न च पर्यायादात्मीयात् किञ्चिद् द्रव्यमेकान्तभिन्नमुपलभ्यते, यत् सम्भाव्येत तस्मिन् पर्याये परस्वभावभूते

१ 'कुण्डलिकात' इति क-ख ग-पाठ । २ 'त्वाद्द्रव्या' इति क-ख-पाठ । ३ 'विक न कृत्रिम' इति क-पाठः ।

विनष्टेऽप्यविनष्टमेकान्ताविष्कृतं नित्यमिति, यस्माच्च पर्यायादनन्यद् द्रव्यं तस्मात् तत्पर्यायनाशे तेनात्मना तद् द्रव्य नश्येत् नान्यपर्यायात्मना, अनेकपर्यायानन्यरूपत्वादनेकात्मकत्वादेकेनात्मना नश्यत्यन्येनात्मनोत्पद्यतेऽन्येन चात्मना ध्रुवमङ्गुलित्ववक्रत्वर्जुत्ववद् महुत्वाच्चात्मनामेकनस्तु विषयाणामेकस्य वस्तुनः, तस्मात् कथमिवैकान्तेनाकाशादयो नित्याः प्रतिपत्तु शक्याः? स्याद्वादस्य देशनातित्वप्रसङ्गात्, आकाशादिष्वौपचारिकावुत्पादविनाशौ स्यातामिति चेत्, तदयुक्तम्, उपचारो ह्यलीकत्वम्, एव सति ध्रौव्यमेवाकाशादिष्ववशिष्यते, न च ध्रौव्यं परमार्थरूपोत्पादविनाशशून्यम्। अपिच-आकाशादिध्रौव्य पारमार्थिकानुपचरितोत्पादविनाशसम्बन्धि ध्रुवत्वात् पुद्गलजीवध्रुवत्ववत्। अथ व्यवहार उपचारः तथापि स व्यवहारः आगमपूर्वको वा स्याल्लोकप्रसिद्धिपूर्वको वा ? । तद् यदि तावदागमपूर्वकस्ततो भगवताऽऽख्यात जगत्स्वरूपं प्रश्नत्रितयेनोत्पादादिना, न च क्वचिदुपचारेण क्वचित् परमार्थत इत्यनागममाकाशादौ ध्रौव्यमेवेति, लोकप्रसिद्ध्यङ्गीकरणे धर्मादिद्रव्याप्रसिद्धिरेव कुतस्तदाश्रयावुत्पादविनाशाविति दूरापास्त धर्मादिद्रव्यध्रौव्यम्। एवमुत्पादव्ययध्रौव्ययुक्त सत्सर्वमिति व्यवस्थित लक्षणम् ॥

ध्रौव्यसिद्धि

एवमुत्पादमभिधाय सप्रपञ्चमधुना विनाशविचारः क्रियते। विनाशोऽपि द्विविधः–समुदायविभागमात्रमर्थान्तरभावगमनं च, तत्र समुदायविभागलक्षणो द्विधा–स्वाभाविकः प्रायोगिकश्च, स्वाभाविको जीवव्यापारनिरपेक्षः, प्रायोगिकस्त्वात्मव्यापारादुपजातः। तत्र स्वाभाविको धर्माधर्माकाशजीवपुद्गलद्रव्याणा द्रव्यात्मनाऽवस्थितानामेव, यथा गतेरधोगतिपरिणामविशेषनाशादूर्ध्वगतिपरिणामे नोत्पादः, तथा क्वचिद् देशेऽवस्थितस्य तद्देशावस्थानविनाशेऽन्यदेशावस्थानोत्पादः, खस्यापि क्वचिद् देशेऽवगाहस्य तद्देशावगाहविनाशे देशान्तरावगाहोत्पादः, तथाऽऽत्मनः केनचिदुपयोगेनोपयुक्तस्य तदुपयोगविनाशादुपयोगान्तरेणोत्पादः, पुद्गलद्रव्यस्यापि वर्णान्तरेण प्राक् परिणतस्यापि तद्विनाशे वर्णान्तरेणोत्पादः, स चैषा पूर्वावस्थाविनाशः, समवस्थानान्तरस्योत्पादसञ्ज्ञकस्याभिव्यक्तिकारणं, समवस्थानान्तरमेव हि तिरोभूत विनाश उच्यते, नहि तत्र किञ्चिद् विद्यमानमभावीभूतमतो द्रव्यात्मस्थिततायामेवोत्पतनव्यक्त्यर्थं सर्पनिपतनविनाशवद्, उत्पतनव्यक्तये सर्पस्य निपतनमेव विनाशः, तस्माद् द्रव्यसतत्त्वोत्पादाविनाभूत एव विगमः, नार्थान्तरम्, यथा पटे तन्तूना विभागेन पटकार्योत्पत्तावविनष्ट तन्तुद्रव्यत्वम्, तदेव प्रत्यक्षीक्रियते यत् तेन पृथक् तन्तुभावेन प्राग् नासीत्, एव समुदायविभागमात्र विनाश। तथाऽर्थान्तरभावगमनमन्यो विनाशः, यदा मनुष्यजन्मन्यात्मपुद्गलसमुदायो विनश्यति तदाऽर्थान्तरभूतेन देवत्वादिना वर्तते, नात्यन्ताभावतया, यथाऽर्हद्दत्तस्य स्थातृक्रियाविशिष्टस्य तत्क्रियाविनाशे गन्तृतयोत्पादोऽर्थान्तरगमन विनाशः, यथा

विनाशे भेदा

१ ' दनेकथादेकेना इति क पाठ । २ ' गन्तृत्वेनार्थान्तर ' इति क–पाठः ।

तस्तेषामेतद् विलक्षणमन्यदेव रूप स्याद् गत्याद्युत्पादसद्भावे, न चान्यद् रूपं लक्ष्यते भुजगप्रसारणाकुण्डलिकृतोत्फणनिफणादिवत्, फणिनो हि स्वभावभूताकृतकसंस्थानान्तराभिव्यक्तिमात्रत्वात् प्राच्यफणिरूपानन्यत्वात् तद् द्रव्यावस्थानात् कुत उत्पादः ? किं हि तत्रोत्पन्नं विद्यमान वा नाभिव्यक्तमित्यत उत्पादाभाव एव, इत्येव धर्मादीनामपि गत्यादीनामुत्पादाभावः स्वरूपावस्थानान्तरमात्रत्वाज्जलतरङ्गतुहिनपटलादिवत्, कुतः स्वाभाविक उत्पादः ? । न चोत्पादस्यान्यः प्रकारो विद्यत इति, तस्मान्नैवास्त्युत्पादः । एव द्रव्यपर्यायनयद्वयापेक्षमस्तित्वमुत्पादस्य नास्तित्व च भावितमात्मपुद्गलद्रव्यविषयम् ॥ अथाकाशधर्माधर्मेष्वविक्रियात्मकेषूत्पादस्याभावात् कुतस्तत्रोत्पादानेकान्त इति ? । उच्यते–तेष्वपि स्वाभाविक उत्पादः समुदायजनितः एकत्विकश्च द्विप्रकारोऽप्यस्ति भजनया । यथैव ह्यात्मन्यौपशमिकादीना भावानामात्मन एव तेन तेनाकारेण वृत्तिरुत्पादः, स्पर्शादीनामणुषु, स्पर्शशब्दादीना च स्कन्धेषु स्वाभाविक उत्पादस्तथा व्योमादिष्ववगाहगतिस्थितयो व्योमादिस्वभावास्तेषा परिणामाः, त एव ह्याकाशादयोऽवगाहाद्याकारेणोत्पन्नाः, तस्य चावगाहादेरुत्पादस्य प्रदेशरूपता यथाऽऽत्मनोऽसङ्ख्याताः प्रदेशास्तत्समुदायश्चात्मा भवति, आकाशस्य चाकाशत्वं स्वाभाविकमकृत्रिममेव, यस्तस्यावगाहोत्पादोऽसावप्यकृत्रिमत्वात् स्वाभाविक एव, यस्मादाकाश शुपिरमवकाशदातृत्वस्वभावम्, तथा धर्माधर्मौ गतिस्थित्यनुग्रहहेतुस्वभावौ,आत्माऽपि ज्ञानात्मकत्वादुपयोगस्वभावः,पुद्गलाश्च मूर्तित्वात् स्पर्शादिस्वभावाः । एवमवगाहादेरुत्पादस्य स्यात् स्वाभाविकत्वम्, तथा स्यादस्वाभाविकत्व समुदायकार्यत्वात् । यथा पटो भूयसां तन्तूना समुदायेन जन्यते, अवगाहादेरपि यथोक्त उत्पादः समुदायजन्यत्वादस्वाभाविकः । यस्मादवगाहोऽवगाह्यावगाहकद्वयसमुदायात्मकः, गतिरपि गन्तृधर्मद्रव्यद्वयसमुदायात्मिका, स्थितिरपि स्थातृधर्मद्रव्यद्वयसमुदायस्वभावा, उपयोगो विज्ञातृज्ञेयसमुदायात्मक., स्पर्शादयोऽपि स्पर्शनादिस्पृश्यादिसमुदायात्मकाः, तस्मात् समुदायात्मकत्वात् स्यादस्वाभाविक', समुदायनिरपेक्षाणामेषामवगाहादीनामभावादेव स्यात् समुदायकृतः स्यादेकत्विक', कथम् ? उत्पादो ह्यवगाहस्याकाशेऽवगाहकानुप्रवेशे व्यक्तिः, सा च व्यक्तिर्व्योमन्येव नान्यत्रापि, तस्य तु व्यञ्जकमेवावगाहक नोत्पादकम्, व्यञ्जक चाकाशादन्यदेव भवति, व्यङ्ग्याद् घटादेरिव प्रदीपादि, ततश्चावगाहस्यैकत्विक उत्पादः, स्यादनैकत्विकः प्राक् प्रतिपादितवत्, ततश्च नभोऽवगाहोऽप्यनित्य एव गुणत्वात् पत्रनीलतावत्, नभसोऽवगाहत्वलक्षणमुपकार', स चावगाढारमन्तरेण जीव पुद्गल वा नाभिव्यज्यत इति अवगाढजीवादिसयोगमात्रमवगाह इति सिद्धम् । सयोगश्चोत्पादी सयुज्यमानवस्तुजन्यत्वात् द्व्यङ्गुलसयोगवत्, यथा चावगाह आकाशस्यैव गतिस्थित्युपयोगरूपादयो गतिमदादिद्रव्यसयोगमात्रत्वादुत्पादादिस्वभावा इति सर्वेऽप्युत्पादविगमध्रुवस्वभावा इत्यर्थः । न च पर्यायादात्मीयात् किञ्चिद् द्रव्यमेकान्तभिन्नमुपलभ्यते, यत् सम्भाव्येत तस्मिन् पर्याये परस्वभावभूते

१ 'कुण्डलिकाता' इति क-ख ग-पाठ । २ त्वादद्रव्या' इति क-ख-पाठ । ३ 'विक न कृत्रिमं' इति क-पाठः ।

विनष्टेऽप्यविनष्टमेकान्ताविष्कृतं नित्यमिति, यस्माच्च पर्यायादनन्यद् द्रव्य तस्मा
तेनात्मना तद् द्रव्य नश्येत् नान्यपर्यायात्मना, अनेकपर्यायानन्यरूपत्वादनेका
त्मना नश्यत्यन्येनात्मनोत्पद्यतेऽन्येन चात्मना ध्रुवमङ्गुलित्ववक्रत्वर्जुत्ववद्
मेकवस्तु विषयाणामेकस्य वस्तुनः,तस्मात् कथमिवैकान्तेनाकाशादयो नित्याः प्र
स्याद्वादस्य देशवर्तित्वप्रसङ्गात्, आकाशादिष्वौपचारिकावुत्पादविनाशौ स्यातां
युक्तम्, उपचारो ह्यलीकत्वम्, एव सति ध्रौव्यमेवाकाशादिष्ववशिष्यते, न
र्थरूपोत्पादविनाशशून्यम् ।अपिच-आकाशादिध्रौव्य पारमार्थिकानुपचरितोत्पाद
ध्रुवत्वात् पुद्गलजीवध्रुवत्ववत् । अथ व्यवहार उपचारः तथापि स व्यवहारः अ
स्याल्लोकप्रसिद्धिपूर्वको वा ? । तद् यदि तावदागमपूर्वकस्ततो भगवताऽऽख्या
प्रश्नत्रितयेनोत्पादादिना, न च क्वचिदुपचारेण क्वचित् परम
ध्रौव्यसिद्धि ममाकाशादौ ध्रौव्यमेवेति, लोकप्रसिद्ध्यङ्गीकरणे धर्मादिद्र
कुतस्तदाश्रयावुत्पादविनाशाविति दूरापास्त धर्मादिद्रव्यध्रौ
त्पादव्ययध्रौव्ययुक्त सत्सर्वमिति व्यवस्थित लक्षणम् ॥

एवमुत्पादमभिधाय सप्रपञ्चमधुना विनाशविचार क्रियते । विनाशोऽ
समुदायविभागमात्रमर्थान्तरभावगमन च, तत्र समुदायविभागलक्षणो द्विध
प्रायोगिकश्च, स्वाभाविको जीवव्यापारनिरपेक्षः, प्रायोगिकस्त्वात्मव्यापारादु
स्वाभाविको धर्माधर्माकाशजीवपुद्गलद्रव्याणा द्रव्यात्मनाऽवस्थितानामेव, यथा
परिणामविशेषनाशादूर्ध्वगतिपरिणामे नोत्पादः, तथा क्व
विनाशे भेदाः स्थितस्य तद्देशावस्थानविनाशेऽन्यदेशावस्थानोत्पादः,
चिद् देशेऽवगाहस्य तद्देशावगाहविनाशे देशान्तरावगाहो
ऽऽत्मनः केनचिदुपयोगेनोपयुक्तस्य तदुपयोगविनाशादुपयोगान्तरेणोत्पादः,
स्यापि वर्णान्तरेण प्राक् परिणतस्यापि तद्विनाशे वर्णान्तरेणोत्पादः, स चैप
विनाशः, समवस्थानान्तरस्योत्पादसञ्ज्ञकस्याभिव्यक्तिकारण, समवस्थानान्तरमे
भूत विनाश उच्यते, नहि तत्र किञ्चिद् विद्यमानमभावीभूतमतो द्रव्यात्मस्थि
त्पतनव्यक्त्यर्थं सर्पनिपतनविनाशवद्, उत्पतनव्यक्तये सर्पस्य निपतनमेव विना
द्रव्यस्वतत्त्वोत्पादाविनाभूत एव विगम, नार्थान्तरम्, यथा पटे तन्तूना वि
कार्योत्पत्तावविनष्ट तन्तुद्रव्यत्वम्, तदेव प्रत्यक्षीक्रियते यत् तेन पृथक् तन्तुभावेन प्र
एव समुदायविभागमात्र विनाशः । तथाऽर्थान्तरभावगमनमन्यो विनाश, यदा
न्यात्मपुद्गलसमुदायो विनश्यति तदाऽर्थान्तरभूतेन देवत्वादिना वर्तते, नात्यन्ताभाव
ऽर्हद्दत्तस्य स्थातृक्रियाविशिष्टस्य तत्क्रियाविनाशे गन्तृतयोत्पादोऽर्थान्तरगमन वि

[1] 'दनेकथादेकेना' इति क-पाठः । [2] 'गन्तृत्वेनार्थान्तर' इति क-पाठः ।

वा घटोपयुक्तस्यात्मनस्तदुपयोगविनाशे पटोपयोगोऽर्थान्तरभावगमनम्, अभावे
नाशे ऽप्यतयोत्पादो विनाशः, तथाऽऽकाशादीनां पूर्वावगाहगतिस्थितिविनाशेऽ
र्थान्तरभावलक्षणो विनाशः, अत एव भावान्तरोत्पत्तितो न विगमो विगम एव
त्पद एवोत्पादः। इत्यमुत्पादविगमौ तत्त्वेनानेकान्तात्मकेन निरूपितावन्वयांशापे
भं प्रतिपद्येते प्रायोगिकस्वाभाविकौ नान्यथेत्येवमुक्ते कश्चिन्मृषाभिमानी महानि
प्रलब्धबुद्धिराचक्षीत-अस्तु स्वाभाविक एव विनाशो निर्हेतुकः, प्रायोगिकस्तु न
नाशहेत्वयोगात्, विनश्यतां हि घटादीनां विनाशस्य हेतुर्न युज्यते, यस्मात् स्वरू
नश्वराः स्वहेतुभ्यो यथास्वमुपजायमाना भङ्गुरप्रकृतय उपजननक्षणानन्तरक
एव जायन्ते, नैषां स्वकारणसामग्रीतः प्रतिलब्धात्मनां सतां प्रकृतिभङ्गुरभावमप

निर्हेतुकनाशपक्ष

न्मुद्गरादेः कारणविशेषाभाशस्य वस्तुन इवोत्पत्तिः, न चेद
प्रकाशमात्रम्, किं तर्हि? उपपत्त्या निभाल्यते विनाशहेतुर
नाशकरण प्रति मुद्गरादेरसामर्थ्यम्, कथ पुनरसामर्थ्यमिति
नाशकरणे हि विनाशस्य त्रयी गतिः-विनश्यमानभावस्वभाव वा कुर्यादथवा स्वभ
वा, तत्राव्यतिरेकपक्षस्तावदतिस्थूल एव, नहि विनाशहेतुर्मुद्गरादि घटादिक
वमेव करोति, स्वकारणेभ्य एव कुलालादिभ्यस्तस्य प्रथममेव निर्वृत्तत्वात् निष्प
न्नित्कार्यत्वात्, नापि स्वभावान्तरे कर्तव्ये तदवस्थस्य घटादेरविचलस्य विनशि
सम्भाव्यते, कुत एव तत्स्वभावप्रच्युतिः? तदवस्थश्च घटः पूर्ववदुपलभ्येत, अ
जलहरणादिका कुर्वीत ॥ ननु चानित्याद् घटादेरर्थान्तर कपालाद्येव विनाशस्ते
हेतुनिष्पादितेन भावस्याघृत्तत्वान्न तथोपलब्ध्यादिप्रसङ्ग इति, उच्यते- न स्वभा
लादिकं विनाशहेतुना क्रियमाणमस्यानित्यस्य घटादेरावरण युज्यते, कृतेऽपि त
लादिके विनाशहेतुना घटे च तदवस्थ एव दृश्यात्मनि कुतस्त्य आवरणसम्भवः?
युज्येते दर्शनादर्शने, विरुद्धत्वात्। नापि विनाशहेतुना तृतीयपक्षापतितो भावाभ
तत्र यद्येवं विकल्प्यते न विवक्षितो भावः अभाव इति ततोऽन्यः स्याद् भाव एव,
वस्य विधिना पर्युदासरूपेण कार्यत्वाभ्युपगमे व्यतिरेकाव्यतिरेकविकल्पानतिक्रमः
यदि व्यतिरिक्तमन्य भावं करोति ततस्तथोपलब्ध्यादिप्रसङ्गस्तदवस्थः, अथाव्यति
भावं करोतीति तदप्ययुक्तम्, तस्य प्रथमतरमेव स्वकरणैर्निर्वर्तितत्वात् ॥ अथ
मात्रमालम्ब्यते, एवं सति अभावस्य भावप्रतिषेधरूपत्वेऽभ्युपेयमाने अभावं करोती
सेनोक्तं भावं न करोतीत्ययमर्थः सम्पद्येत, तथा च सति अकर्तुर्नाशहेत्वभिमतस्याहे
त्वमिति न विनाशहेतुर्नाम कश्चन सम्भवत्यन्यत्र विनष्टुस्तद्धर्मताया इत्युपसहार.,
विनाशहेतुरस्ति, यस्य भावस्य विनाशाय विनाशहेतुः कल्प्यते स भावः स्वभावतो न

१ 'निभाज्यते' इति क-ख पाठ । २ 'अभ्यार्थक्रिया' इति क-ख पाठ ।

वा ? यदि नश्वरः स्वभावत एव भावस्तन्न किञ्चिद् विनाशहेतुनाऽस्य प्रयोजनम्, स्वयं तत्स्वभावतयैव नाशात्, यस्य हि घटादेर्यः स्वभावः स स्वहेतोरेव मृदादिसामग्र्यादिकादुपजायमानस्तादृशो विनाशस्वभावो भवति, न जातुचिद् विनाशे हेत्वन्तरमपेक्षते मुद्गरादिकम्, तत्स्वभावो ह्यात्मलाभानन्तरं स्वयमेव भवत्यन्यथा तत्स्वभाव एव न स्यात्, यश्च यत्स्वभावः स स्वनिष्पत्तिहेतुमपहाय हेत्वन्तरं नापेक्षते प्रकाशादिवत्, प्रकाशादयो हि प्रकाशादिस्वभावाः स्वहेतोरुत्पन्नाः सन्तः पुनरुत्पत्तेः पश्चात् प्रकाशादिस्वभावताया स्वजन्मव्यतिरिक्तं न हेत्वन्तरमपेक्षन्ते ॥ अथ नैव स्वभावतो नश्यति भाव उत्पन्नः ततः पश्चादपि न नश्येदनश्वरस्वभावत्वात् । न च तादृशोऽर्थक्रियासु सामर्थ्यं सम्भाव्यते । तदेतदयुक्तं स्वगोष्ठरमणीयं प्रकाशनमात्रत्वात्, न ह्यनुपपत्तिकमभिधीयमानं विचित्रमपि प्रतिपत्तुमुत्सहन्ते विद्वांसः, प्रकृत्यैव भङ्गुराः सर्वभावा विनाशहेत्वयोगादित्यसिद्धता हेतोः, यस्मादयं विनाशः कदाचिदेव भवत्युपजननक्षणोत्तरकालं नोपजननक्षण एव, उपजननक्षणश्चात्मलाभकालस्तत्र विनाशाभावात् कादाचित्कत्वं विनाशस्य निर्हेतुकविनाशवादिनोऽपि प्रसिद्धम्, न ह्यलब्धात्मलाभं वस्तु विनश्यति, व्योमकुसुमादीनामपि विनाशप्रसङ्गात्, ये च कादाचित्काः पटादयस्ते प्रतिविशिष्टहेतुजन्या एव दृष्टास्तथा विवादास्पदास्कन्दी विनाशोऽपि प्रागविद्यमानः पश्चादात्म-

सहेतुकता नाशस्य

लाभहेतुमपेक्षमाण एवात्मानमासादयति ॥ ननु चैवमभ्युपेयमाने विनाशस्यापि हेतुमत्त्वात् पटादेरिव विनाशेन भवितव्यम्, असत्त्वाच्च निष्कारणो विनाशः खकुसुमादिवदित्यनुमानविरोधिनी प्रतिज्ञेयं कारणवान् विनाश इति । अत्रोच्यते—पूर्वावस्थाप्रच्युतिरुत्तरावस्थोत्पत्तिः उत्तरावस्थापत्तिश्च पूर्वावस्थाप्रच्युतिः, अयमेव विनाशशब्दवाच्योऽर्थो नात्यन्ताभाव इति प्राक् प्रत्यपादि प्रपञ्चेन, ततश्च विनाशस्यापि विनाश इति प्रसिद्धमेव प्रसाध्यते, विनष्टे च विनाशे पुनरवस्थान्तरोत्पत्तिक्रमवृत्त्या न किञ्चिदनिष्टमस्ति स्याद्वादप्रक्रियायाम्, अत एव चासत्त्वान्निष्कारणो विनाश इत्येतदप्यपास्तमेव, असत्त्वस्यासिद्धतादिदोषाघ्रातत्वात्, न चावश्यं सर्वेणैव हेतुमता विनष्टव्यम्, अस्मत्पक्षे स्वात्मावस्थानलक्षणस्य मोक्षस्य सम्यग्ज्ञानादिहेतुकस्याप्यविनाशाभ्युपगमात् । यद्यपि सम्यग्ज्ञानादि[1]र्हेतुः कर्मक्षपणाभ्युपायस्तथापि स्वात्मावस्थानस्य कर्मक्षयरूपत्वाददोषः, विनाशवान् विनाश इति चाभ्युपयतः सौगतस्याभ्युपगमविरोधः । निष्कारणविनाशवादी चेदं प्रष्टव्यः—किं निष्कारणत्वान्नित्यो विनाशः उतासन्निति ? । तत्र यदि नित्यः, कार्योत्पादाभावप्रसङ्गः, द्वितीयविकल्पे विनाशाभावात् सर्वपदार्थानां नित्यत्वप्रसङ्गः । न चासन् सर्व एव निष्कारणः, स्तम्भकुम्भादीनामसत्त्वेऽपीतरे[2]तरात्मना हेतुमत्त्वमस्तीत्यनेकान्तात्, य[3]था चानादित्वात् प्रागभावो निर्हेतुकोऽपि विनश्यत्येव विनाशोऽसन्नपि हेतुमान् किमिति नेष्यते ? । एवं द्रव्यपर्यायात्मकप्रक्रियाप्रपञ्चे विश्वमुखे सर्वमेवैकान्तवाद्युत्प्रेक्षितमसाधनमेव जायते स्या-

---

१ दिर्हेतु ' इति ग पाठ । २ ' पीतरात्मना ' इति ग पाठ । ३ ' यथा वा ' इति क-पाठ ।

द्वादिनं प्रति, विनाशे च सहेतुके प्रतिपादिते यदुक्त–मुद्गरादेरसामर्थ्यं विनाशकरणं प्रति तदयुक्तम् । अस्त्येव हि सामर्थ्यं तद्भावभावितया कपालाद्युत्पत्तेः, विकल्पत्रयं च सुकुमारप्रज्ञेन प्रमाणविचारपरिक्लेशासहिष्णुना यथाकथञ्चिदुपन्यस्य प्रथमविकल्पोऽतिस्थूल इत्येवोपेक्षितो मनागागतत्रपेण, तथा द्वितीयविकल्प' स्वभावान्तर किल क्रियते विनाशहेतुना, घटतादवस्थ्ये तु सकलघटनिष्पाद्यजलधारणादिक्रियाप्रसङ्ग इति शापदानमुदघोषि। एतच्च विकल्पद्वयं न जाने किं प्रथमतरमेव मायासूनुनोत्पातमुत्पन्नसर्वार्थज्ञानेनाहोस्विद् भिक्षुवरधर्मकीर्तिनैव स्वयमुत्प्रेक्षितमिति यत् सत्य विस्मिताः स्मोऽनया वाचोयुक्त्या, किं विनाशहेतुर्घटमेव करोति उत स्वभावान्तरमिति ? यद् विनाशहेतुना क्रियते तदेवैक न व्यपादेशि गलितधिषणेन, घटविनाशहेतुर्घटविनाशमेव करोति, स चोक्तोऽवस्थान्तरापत्तिलक्षणः प्रथममेव, अभावविकल्पेऽपि पर्युदासाभ्युपगमे किल विवक्षिताद् भावादन्यं भावमेव करोति, ततश्च पूर्ववद् व्यतिरेकाव्यतिरेकविकल्पानतिक्रमः, व्यतिरेकाव्यतिरेकविकल्पौ च विहितप्रतिक्रियौ प्राग् विकल्पाभासत्वाचायुक्तौ, प्रसज्यप्रतिषेधपक्षे स्वभाव करोति, भाव न करोतीति वाक्यार्थः, तदेतदयुक्तम्, असत्प्रक्रियानवबोधात्, जैनी प्रक्रिया द्रव्यपर्यायावुभौ वस्तु भावाभावस्वभाव, न चाभावः कश्चिद् भावान्निर्लुठितः सम्भवति यं विनाशहेतुः करिष्यति, न चास्ति काचित् क्रिया द्रव्यादत्यन्तव्यतिरिच्यमानस्वभावा यस्याः प्रसज्यप्रतिषेधेन निवारणा क्रियेत, द्रव्यमेव हि तथोद्भूतपरिणाम क्रियाव्यपदेशमश्नुते द्रव्यनयस्य, पर्युदासो हि विधिरूपत्वाद् द्रव्यास्तिकः, इतरः पर्यायनयः प्रतिषेधमात्रत्वात्, एतौ च परस्परापेक्षावेव च वस्तु नैककौ, ततश्च विभागाभावादसद्विकल्पता । अपिच भावो वस्तु परिनिष्पन्न, तस्य कुतः कारणेनाभिसम्बन्ध. ? पूर्वोत्पादार्थत्वात् करोते., अथ घ्रष्टु कुर्वित्युपचारः, तथापि यत् किञ्चिद् भावस्य करणम्, अभावश्चापरिनिष्पन्नमवस्थान्तररूप वस्तु, तन्निष्पादनाय यत्नः क्रियते, तच्च नात्यन्तमसन्न सर्वथा सदित्यभावविशिष्टस्यैव वस्तुनो वस्तुत्वात् । यदप्युक्त–वैयर्थ्याच्च न विनाशहेतुरिति तदप्यसमीक्षिताभिधानम्, असत्प्रक्रियानवगमात् । वैस्रसिकः प्रायोगिकश्च द्विधा विनाशः, तत्र प्रायोगिकः कादाचित्कत्वात् पटादिवत् सहेतुक., न च दृष्टमपह्नोतु शक्य, प्रमाणतः पदार्थस्वरूपावबोधात्, आत्मलाभसमनन्तरमेव च सर्वथा विनश्यन्ति पदार्था इति न किञ्चिदस्मिन्नर्थे प्रमाणमस्ति, कालान्तरावस्थायिनि च विनाशे प्रत्यक्षबुद्धेर्व्यापार. । यच्चावाचि–प्रकाशादयो लब्धात्मलाभा प्रकाशादिस्वभावतया स्वजन्मैवापेक्षन्ते, नापर हेत्वन्तरम्, एतदप्यसङ्गतम्, यदि प्रकाशादय उत्पन्ना पुनरुत्पत्तौ हेत्वन्तर नापेक्षन्त इति वाक्यार्थ. ततः किं केन सङ्गतम् ? न ह्युत्पन्न' पदार्थस्तेन रूपेण पुनर्हेतुमभिलषति, लब्धात्मलाभ. कालान्तरे हेतुमपेक्ष्य विनश्यतीति जागृमहे ॥ ननु च स स्वहेतोरेवोत्पद्यमानस्तादृशो भवति येनोत्पत्तिसमन-

---

१ ' लक्षणात् प्रथम' इति क-ख-पाठ । २ ' कल्पासत्वात् ' इति क ख पाठ । ३ ' कल्पना ' इति क-पाठ । ४ ' पृष्ट ' इति ग पाठ । ५ 'कारण' इति क-ख पाठ । ६ 'जगृमहे ' इति ग-पाठः ।

न्तरमेव विनश्यतीति, अयुक्तमिदम्, प्रतिज्ञामात्रत्वात्, वयमपि ब्रूमः—स स्वहेतुरेव तादृश उपजायते येन कालान्तरमवस्थाय विनश्यतीति, अत्र च पक्षे प्रत्यक्षाद्यपि प्रमाण सहायीभवति ॥ ननु च निष्कारणविनाशवादिनामियं युक्तिः—"नष्टा चेन्नाशविघ्नः कः ? न चेन्नैव विनङ्क्ष्यति" इति, प्रतिकृतविधानैषा युक्तिः, "प्रागभूतात्मलाभत्वान्नाशः कारणवान् भवेत्" इति । स्वभावश्च वस्तुनो धर्मः परिणतिविशेषः, स च कश्चित् सादिवर्णादिपरिणामः, कश्चिदनादिः सत्तामूर्तत्वामूर्तत्वापरिणाम इति, अतोऽनेकान्तेनेव यो यत्स्वभावः स सर्वदा तत्स्वभाव एव कदाचिन्नश्यति कदाचिदवतिष्ठते कदाचिदुत्पद्यत इत्यलमतिप्रसङ्गेन । स्थितमिदम्-प्रायोगिकोऽप्यस्ति विनाश इति । एतेऽनस्थित्युत्पादविनाशत्रयोऽप्येककालाः निभिन्नकालाश्च परस्परतोऽनर्थान्तरमर्थान्तर च, तत्रोत्पादविनाशयोरेककालताया सिषाधयिषिताया स्वात्मत्वापृथग्भावः कारणम्, नहि उत्पादविनाशयोः स्वात्मा भिद्यते, यथैकस्मिन्नेकक्षणवर्तिनि रूपे विभागाभावात् स्वात्मलाभकाल एवैकः कालो नान्यः समस्ति, यच्चैककाल न भवति तदेकमपि नियमेन न भवति, यथा गवाश्वयोर्जन्मविनाशाविति । एवमुत्पादविनाशयोरेककालता, एवमुत्पादविनाशाभ्या द्रव्यमभिन्नकाल साध्यम्, तयोत्पादविनाशौ द्रव्यादभिन्नकालौ ताभ्यामेव हेतुदृष्टान्ताभ्या वाच्यौ ॥ ननु चैकान्तवादी स्वात्मत्वापृथग्भूतत्वमुत्पादविनाशयोर्न प्रतिजानीते, तत्प्रसाधनाय परिकरः सर्पद्रव्यस्यात्मन्युत्पतनाकारेणोत्पादः, तस्यैवात्मनि पतनाकारेण विगमः, सर्पद्रव्यात्मैवोभयाकारः नहि सर्पात्मा भिद्यते, न चेद् भिद्यते ततः सर्पस्वभावैव, अत एवानर्थान्तरताऽपि ग्राह्या, अनर्थान्तरमुत्पादविनाशौ परस्परानधिकौ, तत्प्रतिपत्तेरभिन्नकालत्वात्, तस्योत्पादस्यारम्भो विशिष्यते अभिन्नकालत्वेन। केन सहाभिन्नकाल इति चेत्, सामर्थ्याद् विनाशेन,यस्माद् विनश्यतो हि योऽन्त्यक्षणो यश्चोत्पादस्याद्यक्षणस्तदेतावुत्पादविनाशावेककालावनर्थान्तर च, यदि चान्यो विनाशकालः स्यात् पूर्वस्यान्यश्चोत्पादकालः स्यादुत्तरस्य, ततः प्रागेतनं विनष्टमुत्तरमनुत्पन्नम्, एव च वस्तुशून्यः कालो भवेन्निर्बीजं चोत्तरमुत्पद्येत, तस्मादभिन्नकालावनर्थान्तर च ताविति । यथैकक्षणवर्तिनो रूपस्यैकत्वादेव तत्प्रतिपत्त्यभिन्नकालतेत्येतत् प्रतिपादयति । अन्यस्य ह्यन्येन भिन्नकालता सम्भाव्येत, न पुनस्तस्य तेनैवेति वाक्यार्थः । एवमितरत्रापि द्वयेऽनर्थान्तरता भावनीया, हेतुदृष्टान्तौ तु तावेव । नैगमनयाभिप्रायेण तूत्पादविनाशद्रव्याणा भिन्नकालता, उत्पादो हि प्रागभावः, स च द्रव्यधर्मत्वाद् द्रव्यवृत्तिः, प्रध्वसाभावोऽपि विनाशः सोऽपि द्रव्यधर्म एव, द्रव्यमपि द्रव्यात्मरूपमजहत् स्वात्मनि वर्तते, ततश्चोत्पद्य कश्चित् काल स्थित्वा प्रध्वंसाभावाद् विनश्यति, एव भिन्नकालाः प्रत्येकात्मकालवृत्तित्वात् परस्परविभिन्नात्मानोऽर्थान्तरभूता इतियावत्, पटव्योमादीना चात्यन्त-

१ 'सादिपरिणाम' इति क पाठ । २ 'एतेन च' इति क ख पाठ । ३ 'स्वरमतत्वा' इति क-पाठ । ४ 'रूपेण' इति क-पाठ । ५ 'प्रध्वसद्' इति ग पाठ ।

पृथग्भूतरूपाणामत्यन्तभिन्नकालानां च नैकत्वं दृष्टम्, यो वाऽद्य जनित्वा म्रियते यश्च वर्षशतं जीवित्वा मरणमनुभवति न तयोस्तुल्यकालता युक्ता, तथा न घटोत्पादकाल एव विनाशकालः, क्रियाफलानाश्वासप्रसङ्गात्, यदि घटरूपनिर्वृत्त्यनन्तरमेव घटस्य विनाशः ततः क्रियाफले घटे स्यादनाश्वासः, विनष्टेन तेन घटकार्याकरणात्, तस्माद् भिन्नकालावुत्पादविनाशौ। तथाऽर्थान्तरमुत्पादस्थितिभङ्गाः परस्परतः स्वलक्षणभेदात्, आत्मलाभात्मावस्थानात्महानिस्वभावाः खल्वेते, यत्र च स्वलक्षणभेदस्तत्रार्थान्तरता दृष्टा घटपटादिषु, यत्र चानर्थान्तरता न तत्र स्वलक्षणभेदः, यथैकलक्षणवर्तिनि रूप इति। एवं भिन्नाभिन्नकालतोत्पादादीनामर्थान्तरत्वमनर्थान्तरता च स्याद्वादप्रक्रियाया सकलप्रमाणाविरोधिनी सिध्यति, नैकान्तवादेषूत्पादादयः सम्भवन्ति, भेदाभेदादिलक्षणानभ्युपगमात्। तस्मादवस्थितमिदम्–उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ २९ ॥

एवं प्रपञ्चतः सल्लक्षणमुपपाद्योत्तरसूत्रसम्बन्धाय ग्रन्थमुपचिक्षेप भाष्यकारः—

**भा०—अत्राह—गृह्णीमस्तावदेवंलक्षणं सदिति, इदं तु वाच्यं–तत् किं नित्यमाहोस्विदनित्यमिति ? । अत्रोच्यते—**

टी०—अत्राहेत्यादि। अत्रावसरे परः प्रश्नयति, प्रतिपादितसल्लक्षणानुमोदनाद्वारेण गृह्णीमस्तावदेवंलक्षणं सदित्येवंविधस्य सत्त्वमनुमन्यामहे युक्त्यागमभाजः, तावच्छब्दः प्रक्रमावद्योतनार्थः, पूर्वमेव सत्त्वं निश्चेयम्, निश्चिते सत्त्वे पश्चान्नित्यताऽनित्यता च चिन्त्या, एवं लक्षणमस्येत्युत्पादादित्रययोगमुल्लिङ्गयति। इतिशब्दो हेत्वर्थः। यस्मात् सत् तस्मात् इदं तु वाच्यं–तत् किं नित्यमाहोस्विदनित्यमिति ? तुशब्दस्तस्मादित्यस्यार्थमभिधत्ते, तदिति सतः परामर्शः, तत् सत् किं नित्यमनित्यमिति, सप्तसु विकल्पेषु सति सम्भवत्सु प्रश्नद्वयोपन्यासः किमर्थ इति चेत्, उच्यते—द्रव्यास्तिकनयपर्यायास्तिकसम्परिग्रहार्थः, तत्सम्परिग्रहाच्च शेषविकल्पसूचनमवसेयम्, कुतः पुनरियमारेका प्रष्टुः ? उच्यते—सतां नित्यानित्यत्वदर्शनात्, सद् व्योमादि नित्यं दृष्टं सच्च घटादि अनित्यमतः सन्देहः। अथवा आदावित्युक्तम्—"नित्यावस्थितान्यरूपाणि" (अ० ५, सू० ३) इति तत्रैव मन्यते–न सर्वं सन्नित्यमरूपग्रहणात् रूपवतस्त्वनित्यत्वमर्थादतो न सत् सर्वं नित्यं नाप्यनित्यमितीष्यतेऽवस्थित्यंशाङ्गीकरणेन रूपवदपि नित्यम्। यथाऽऽह भगवान्–" से[2] जहा णामए पचत्थिकाया सिया " इत्यादि सूत्रम् ॥ अन्यथा तूत्पादव्ययध्रौव्ययुक्तं सदित्यव्यापि सल्लक्षणं स्यात्, अत इदं तु वाच्यम्–तत् किं सर्वथा नित्यमाहोस्वित् स्थित्यंशसमाश्रयणेनैव नित्यमिति ? । आचार्यस्तु स्थित्यंशमभिप्रेत्याह—अत्रोच्यते ॥

(हाशिये में:) उत्पादादेर्नित्यानित्यत्वे

१ 'सल्लक्षण' इति ग पाठः ।
२ अथ यथा नाम पञ्चास्तिकायाः स्यात्।

## सूत्रम्—तद्भावाव्ययं नित्यम् ॥ ५-३० ॥

टी०—तदित्यनेनाभिसम्बध्यते सत्, तस्य-सतो भवन-भावस्तद्भावः, कर्तरि षष्ठी, तदेव हि सत् तथा तथा भवति जीवादि देवादिरूपेण, न जातुचित् सत्त्वत्यागेनान्यथा भवति, तद्भावादव्ययं तद्भावाव्ययम् अविनाशि नित्यं, नित्यग्रहणात् ध्रौव्यांशपरिग्रहः, " नेर्ध्रुवे त्यप् " ( सिद्ध० अ० ६, पा० ३, सू० १७ ) इति वचनात्, स ह्यन्वयी द्रव्यास्तिकांशः सर्वदा सर्वत्र न विच्छिद्यते, सदाकारेणानुत्पत्तेरविनाशाच्च, भावशब्दोपादानात् परिणामनित्यता गृह्यते, कूटस्थनित्यता त्यज्यते, अन्यथा 'तदव्ययं नित्य'मिति सूत्रं स्यात् । यत् तु न केनचिदाकारेण विक्रियते तदनुपाख्यमेव भवेत्, सत्त्वं च सर्वेषामन्वयिना धर्मेणा सूचकम्, पञ्चास्तिकायव्यापित्वात् तु सत्त्वपरिग्रहः, साक्षाज्जीवस्तावत् सत्त्वं चैतन्यममूर्तत्वमसङ्ख्येयप्रदेशत्वं चाजहत् तथातथापरिणामान्न व्यगात् न व्येति न व्येष्यत्यविनाश्यव्ययो नित्य उच्यते, न पुनर्देवादिपर्यायेणाप्यनन्वयिना नित्यता ध्रौव्यमस्य विद्यते, तथा परमाणुद्व्यणुकादिपुद्गलद्रव्यं सत्त्वमूर्तत्वाजीवत्वानुपयोगग्राह्यादिधर्मानपरित्यजद् विवर्तते, न घटादिपर्यायविवक्षया ध्रौव्यम्, धर्मद्रव्यमपि सत्त्वामूर्तत्वासङ्ख्येयप्रदेशवत्त्वलोकव्यापित्वादिधर्मात्यागेनावतिष्ठते, न तु परमाणुदेवदत्तादीनां प्रत्येकं गन्तृत्वस्य विवक्षाया गत्युपकारित्वेन नित्यत्वम्, गन्तृभेदाद्धि गत्युपकारित्वं भिद्यते अन्यादृशाकारेण पूर्वः परिणामोऽन्यादृशेनाकारेण पाश्चात्यः, नहि प्रथमतरमुत्पन्नो गत्युपकारित्वपरिणामः सर्वदाऽवतिष्ठते, स्वरूपव्यतिरिक्तवस्तुसम्बन्धितयोपजायमानत्वाद् घटादिवत्, एवमधर्मद्रव्यमपि द्रष्टव्यम्, स्थित्युपकारितया चानित्यत्वभावना, आकाशं तु सत्त्वामूर्तत्वानन्तप्रदेशवत्त्वादिधर्मद्वारेण नित्यम्, अवगाहकापेक्षयाऽवगाहदातृत्वेनानित्यम्, यत्राप्यवगाहकं जीवपुद्गलं नास्ति तत्राप्यगुरुलघ्वादिपर्यायवत्तयाऽवश्यतयैवानित्यताऽभ्युपेया, ते त्वन्ये चान्ये च भवन्ति, अन्यथा तत्र न स्वत उत्पादव्ययौ नाप्यापेक्षिकाविति न्यूनमेव सल्लक्षणं स्यात्, इमामेव परिणामनित्यतां भाष्येण दर्शयति—

द्रव्यस्य नित्यता

**भा०—यत् सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥**

टी०—यत् सत इत्यादि । सत्त्वादेरन्वयिनोंऽशान्न व्येति न विनश्यति नापि विनङ्क्ष्यति तन्नित्यम्, किं पुनः कारणमप्रवृत्तः कालो नोदाहृतः ? । एवं मन्यते भाष्यकार—नातीतप्रत्याख्याने वर्तमानः सम्भवति, वर्तमानावधिकमेवातीतत्वम् अतीतासत्त्वे निर्मूलस्य वस्तुनोऽनुत्थानप्रसङ्गात्, तस्मादनादि जीवादि सत्त्वादि, एवं तर्हि भविष्यतो ग्रहणं किमर्थम् ? अत्राप्येवं मन्यते—केचिदविविक्तबुद्धयः प्रत्याख्यापयन्ति न वर्तमानकालावच्छिन्नस्य वस्तुनः कदाचिद् भविष्यत्कालाभिसम्बन्ध इति, तन्निषेधार्थं भविष्यद्ग्रहणम्, अथवा तद्भावेनाव्ययं,

१ 'रिक्तसम्बन्धि' इति क-ख-पाठः । २ 'पुद्गलावयनादि तत्रा०' इति ग-पाठः ।

पृथग्भूतरूपाणामत्यन्तभिन्नकालानां च नैकत्वं दृष्टम्, यो वाऽद्य जनित्वा म्रियते यश्च वर्षशतं जीवित्वा मरणमनुभवति न तयोस्तुल्यकालता युक्ता, तथा न घटोत्पादकाल एव विनाशकालः, क्रियाफलानाश्वासप्रसङ्गात्, यदि घटरूपनिर्वृत्त्यनन्तरमेव घटस्य विनाशः ततः क्रियाफले घटे स्यादनाश्वासः, विनष्टेन तेन घटकार्याकरणात्, तस्माद् भिन्नकालावुत्पादविनाशौ। तथाऽर्थान्तरमुत्पादस्थितिभङ्गाः परस्परतः स्वलक्षणभेदात्, आत्मलाभात्मावस्थानात्महानिस्वभावाः खल्वेते, यत्र च स्वलक्षणभेदस्तत्रार्थान्तरता दृष्टा घटपटादिषु, यत्र चानर्थान्तरता न तत्र स्वलक्षणभेदः, यथैकलक्षणवर्तिनि रूप इति। एव भिन्नाभिन्नकालतोत्पादादीनामर्थान्तरत्वमनर्थान्तरता च स्याद्वादप्रक्रियाया सकलप्रमाणाविरोधिनी सिध्यति, नैकान्तवादेषूत्पादादयः सम्भवन्ति, भेदाभेदादिलक्षणानभ्युपगमात्। तस्मादवस्थितमिदम्—उत्पादव्ययध्रौव्ययुक्त सदिति ॥ २९ ॥

एव प्रपञ्चतः सल्लक्षणमुपपाद्योत्तरसूत्रसम्बन्धाय ग्रन्थमुपचिक्षेप भाष्यकारः—

**भा०—अत्राह—गृह्णीमस्तावदेवंलक्षणं सदिति, इदं तु वाच्यं-तत् किं नित्यमाहोस्विदनित्यमिति? । अत्रोच्यते—**

**टी०**—अत्राहेत्यादि। अत्रावसरे परः प्रश्नयति, प्रतिपादितसल्लक्षणानुमोदनाद्वारेण **गृह्णीमस्तावदेवलक्षणं सदि**त्येवविधस्य सत्त्वमनुमन्यामहे युक्त्यागमभाजः, तावच्छब्दः प्रक्रमावद्योतनार्थः, पूर्वमेव सत्त्व निश्चेयम्, निश्चिते सत्त्वे पश्चान्नित्यताऽनित्यता च चिन्त्या, **एवं लक्षणम**स्येत्युत्पादादित्रययोगमुल्लिङ्गयति। **इति**शब्दो हेत्वर्थः। यस्मात् सत् तस्मात् **इदं तु वाच्यं-तत् किं नित्यमाहोस्विदनित्यमिति?** तुशब्दस्तस्मादित्यस्यार्थमभिधत्ते, तदिति सतः परामर्शः, तत् सत् किं नित्यमनित्यमिति, सप्तसु विकल्पेषु सति सम्भवत्सु प्रश्नद्वयोपन्यासः किमर्थ इति चेत्, उच्यते—द्रव्यास्तिकनयपर्यायास्तिकसम्परिग्रहार्थः, तत्सम्परिग्रहाच्च शेषविकल्पसूचनमवसेयम्, कुतः पुनरियमारेका प्रष्टुः? उच्यते—सतां नित्यानित्यत्वदर्शनात्, सद् व्योमादि नित्य दृष्ट सच्च घटादि अनित्यमतः सन्देहः। अथवा आदावेवमुक्तम्—"नित्यावस्थितान्यरूपाणि" (अ० ५, सू० ३) इति तत्रैव मन्यते—न सर्वं सन्नित्यमरूपग्रहणात् रूपवतस्त्वनित्यत्वमर्थादतो न सत् सर्वं नित्य नाप्यनित्यमितीष्यतेऽवस्थित्यशाङ्गीकरणेन रूपवदपि नित्यम्। यथाऽऽह भगवान्—"से[२] जहा णामए पचत्थिकाया सिया" इत्यादि सूत्रम् ॥ अन्यथा तूत्पादव्ययध्रौव्ययुक्त सदित्यव्यापि सल्लक्षण स्यात्, अत इद तु वाच्यम्—तत् किं सर्वथा नित्यमाहोस्वित् स्थित्यंशसमाश्रयणेनैव नित्यमिति?। आचार्यस्तु स्थित्यंशमभिप्रेत्याह—**अत्रोच्यते** ॥

उत्पादादेर्नित्यानित्यत्वे

---

१ 'सल्लक्षण' इति ग पाठ।

२ अथ यथा नाम पञ्चास्तिकाया स्यात्।

## सूत्रम्—तद्भावाव्ययं नित्यम् ॥ ५-३० ॥

टी०—तदित्यनेनाभिसम्बध्यते सत्, तस्य–सतो भवन–भावस्तद्भावः, कर्तरि षष्ठी, तदेव हि सत् तथा तथा भवति जीवादि देवादिरूपेण, न जातुचित् सत्त्वत्यागेनान्यथा भवति, तद्भावादव्ययं तद्भावाव्ययम् अविनाशि नित्यं, नित्यग्रहणात् ध्रौव्यांशपरिग्रहः, "नेर्ध्रुवे त्यप्" (सिद्ध० अ० ६, पा० ३, सू० १७) इति वचनात्, स ह्यन्वयी द्रव्यास्तिकांशः सर्वदा सर्वत्र न विच्छिद्यते, सदाकारेणानुत्पत्तेरविनाशाच्च, भावशब्दोपादानात् परिणामनित्यता गृह्यते, कूटस्थनित्यता त्यज्यते, अन्यथा 'तदव्ययं नित्य'मिति सूत्रं स्यात् । यत्तु न केनचिदाकारेण विक्रियते तदनुपाख्यमेव भवेत्, सत्त्वं च सर्वेषामन्वयिना धर्मोणा सूचकम्, पञ्चास्तिकायव्यापित्वात् तु सत्त्वपरिग्रहः, साक्षाज्जीवस्तावत् सत्त्वं चैतन्यममूर्तत्वमसङ्ख्येयप्रदेशत्वं चाजहत् तथातथापरिणामान्न व्यगात् न व्येति न व्येष्यत्यविनाश्यव्ययो नित्य उच्यते, न पुनर्देवादिपर्यायेणाप्यनन्वयिना नित्यता ध्रौव्यमस्य विद्यते, तथा परमाणुद्व्यणुकादिपुद्गलद्रव्यं सत्त्वमूर्तत्वाजीवत्वानुपयोगग्राह्यादिधर्मानपरित्यजद् विवर्तते, न घटादिपर्यायविवक्षया ध्रौव्यम्, धर्मद्रव्यमपि सत्त्वामूर्तत्वासङ्ख्येयप्रदेशवत्त्वलोकव्यापित्वादिधर्मात्यागेनावतिष्ठते, न तु परमाणुदेवदत्तादीनां प्रत्येकं गन्तृत्वस्य विवक्षाया गत्युपकारित्वेन नित्यत्वम्, गन्तृभेदाद्धि गत्युपकारित्वं भिद्यते अन्यादृशाकारेण पूर्वः परिणामोऽन्यादृशेनाकारेण पाश्चात्यः, नहि प्रथमतरमुत्पन्नो गत्युपकारित्वपरिणामः सर्वदाऽवतिष्ठते, स्वरूपव्यतिरिक्तवस्तुसम्बन्धितयोपजायमानत्वाद् घटादिवत्, एवमधर्मद्रव्यमपि द्रष्टव्यम्, स्थित्युपकारितया चानित्यत्वभावना, आकाशं तु सत्त्वामूर्तत्वानन्तप्रदेशवत्त्वादिधर्मद्वारेण नित्यम्, अवगाहकापेक्षयाऽवगाहदातृत्वेनानित्यम्, यत्राप्यवगाहकं जीवपुद्गल नास्ति तत्राप्यगुरुलघ्वादिपर्यायवत्तयाऽवश्यतयैवानित्यताऽभ्युपेया, ते त्वन्ये चान्ये च भवन्ति, अन्यथा तत्र न स्तत उत्पादव्ययौ नाप्यापेक्षिकाविति न्यूनमेव सल्लक्षणं स्यात्, इमामेव परिणामनित्यतां भाष्येण दर्शयति—

द्रव्यस्य नित्यता

**भा०—यत् सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥**

टी०—यत् सत इत्यादि । सत्त्वादेरन्वयिनोंऽशान्न व्येति न विनश्यति नापि विनङ्क्ष्यति तन्नित्यम्, किं पुनः कारणमप्रवृत्तः कालो नोदाहृतः ? । एवं मन्यते भाष्यकारः–नातीतप्रत्याख्याने वर्तमानः सम्भवति, वर्तमानावधिकमेवातीतत्वम् अतीतासत्त्वे निर्मूलस्य वस्तुनोऽनुत्थानप्रसङ्गात्, तस्मादनादि जीवादि सत्त्वादि, एवं तर्हि भविष्यतो ग्रहणं किमर्थम् ? अत्राप्येवं मन्यते–केचिदविविक्तबुद्धयः प्रत्याख्यापयन्ति न वर्तमानकालावच्छिन्नस्य वस्तुनः कदाचिद् भविष्यत्कालाभिसम्बन्ध इति, तन्निषेधार्थं भविष्यद्ग्रहणम्, अथवा तद्भावेनाव्ययं,

---

१ 'रिक्तसम्बन्धि' इति क ख पाठ । २ 'पुद्गलायनादि तत्रा०' इति ग-पाठ ।

पृथग्भूतरूपाणामत्यन्तभिन्नकालानां च नैकत्वं दृष्टम्, यो वाऽद्य जनित्वा म्रियते यश्च वर्षशतं जीवित्वा मरणमनुभवति न तयोस्तुल्यकालता युक्ता, तथा न घटोत्पादकाल एव विनाशकालः, क्रियाफलानाश्वासप्रसङ्गात्, यदि घटरूपनिर्वृत्त्यनन्तरमेव घटस्य विनाशः ततः क्रियाफले घटे स्यादनाश्वासः, विनष्टेन तेन घटकार्याकरणात्, तस्माद् भिन्नकालावुत्पादविनाशौ। तथाऽर्थान्तरमुत्पादस्थितिभङ्गाः परस्परतः स्वलक्षणभेदात्, आत्मलाभात्मावस्थानात्महानिस्वभावाः खल्वेते, यत्र च स्वलक्षणभेदस्तत्रार्थान्तरता दृष्टा घटपटादिषु, यत्र चानर्थान्तरता न तत्र स्वलक्षणभेदः, यथैकलक्षणवर्तिनि रूप इति। एव भिन्नाभिन्नकालतोत्पादादीनामर्थान्तरत्वमनर्थान्तरता च स्याद्वादप्रक्रियाया सकलप्रमाणाविरोधिनी सिध्यति, नैकान्तवादेषूत्पादादयः सम्भवन्ति, भेदाभेदादिलक्षणानभ्युपगमात्। तस्मादवस्थितमिदम्—उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ २९ ॥

एव प्रपञ्चतः सल्लक्षणमुपपाद्योत्तरसूत्रसम्बन्धाय ग्रन्थमुपचिक्षेप भाष्यकारः—

**भा०—अत्राह—गृह्णीमस्तावदेवंलक्षणं सदिति, इदं तु वाच्यं-तत् किं नित्यमाहोस्विदनित्यमिति ?। अत्रोच्यते—**

टी०—अत्राहेत्यादि। अत्रावसरे परः प्रश्नयति, प्रतिपादितसल्लक्षणानुमोदनाद्वारेण गृह्णीमस्तावदेवलक्षणं सदित्येवविधस्य सत्त्वमनुमन्यामहे युक्त्यागमभाजः, तावच्छब्दः प्रक्रमावद्योतनार्थः, पूर्वमेव सत्त्व निश्चेयम्, निश्चिते सत्त्वे पश्चान्नित्यताऽनित्यता च चिन्त्या, एवं लक्षणमस्येत्युत्पादादित्रययोगमुल्लिङ्गयति। इतिशब्दो हेत्वर्थ.। यस्मात् सत् तस्मात् इदं तु वाच्यं-तत् किं नित्यमाहोस्विदनित्यमिति ? तुशब्दस्तस्मादित्यस्यार्थमभिधत्ते, तदिति सतः परामर्श', तत् सत् किं नित्यमनित्यमिति, सप्तसु विकल्पेषु सति सम्भवत्सु प्रश्नद्वयोपन्यासः किमर्थ इति चेत्, उच्यते—द्रव्यास्तिकनयपर्यायास्तिकसम्परिग्रहार्थः, तत्सम्परिग्रहाच्च शेषविकल्पसूचनमवसेयम्, कुतः पुनरियमारेका प्रष्टुः ? उच्यते—सता नित्यानित्यत्वदर्शनात्, सद् व्योमादि नित्य दृष्ट सच घटादि अनित्यमतः सन्देहः। अथवा आदाविदमुक्तम्—"नित्यावस्थितान्यरूपाणि" (अ० ५, सू० ३) इति तत्रैव मन्यते-न सर्वं सन्नित्यमरूपग्रहणात् रूपवतस्त्वनित्यत्वमर्थादतो न सत् सर्व नित्य नाप्यनित्यमितीष्यतेऽवस्थित्यंशाङ्गीकरणेन रूपवदपि नित्यम्। यथाऽऽह भगवान्—"से[२] जहा णामए पचत्थिकाया सिया" इत्यादि सूत्रम् ॥ अन्यथा तूत्पादव्ययध्रौव्ययुक्त सदित्यन्यापि सल्लक्षण स्यात्, अत इद तु वाच्यम्-तत् किं सर्वथा नित्यमाहोस्वित् स्थित्यंशसमाश्रयणेनैव नित्यमिति ?। आचार्यस्तु स्थित्यंशमभिप्रेत्याह—अत्रोच्यते ॥

उत्पादादेर्नित्यानित्यत्वे

१ 'सल्लक्षण' इति ग पाठ।
२ अथ यथा नाम पञ्चास्तिकाया स्यात्।

## सूत्रम्—तद्भावाव्ययं नित्यम् ॥ ५-३० ॥

टी०—तदित्यनेनाभिसम्बध्यते सत्, तस्य-सतो भवन-भावस्तद्भावः, कर्तरि षष्ठी, तदेव हि सत् तथा तथा भवति जीवादि देवादिरूपेण, न जातुचित् सत्त्वत्यागेनान्यथा भवति, तद्भावादव्ययं तद्भावाव्ययम् अविनाशि नित्यं, नित्यग्रहणात् ध्रौव्यांशपरिग्रहः, "नेर्ध्रुवे त्यप्" (सिद्ध० अ० ६, पा० ३, सू० १७) इति वचनात्, स ह्यन्वयी द्रव्यास्तिकांशः सर्वदा सर्वत्र न विच्छिद्यते, सदाकारेणानुत्पत्तेरविनाशाच्च, भावशब्दोपादानात् परिणामनित्यता गृह्यते, कूटस्थनित्यता त्यज्यते, अन्यथा 'तदव्ययं नित्य'मिति सूत्रं स्यात् । यत् तु न केनचिदाकारेण विक्रियते तदनुपादेयमेव भवेत्, सत्त्वं च सर्वेषामन्वयिना धर्मेणा सूचकम्, पञ्चास्तिकायव्यापित्वात् तु सत्त्वपरिग्रहः, साक्षाज्जीवस्तावत् सत्त्वं चैतन्यममूर्तत्वमसङ्ख्येयप्रदेशत्वं चाजहत् तथातथापरिणामान्वयगात् न व्येति न व्येष्यत्यविनाश्यव्ययो नित्य उच्यते, न पुनर्देवादिपर्यायेणाप्यनन्वयिना नित्यता ध्रौव्यमस्य विद्यते, तथा परमाणुद्व्यणुकादिपुद्गलद्रव्यं सत्त्वमूर्तत्वाजीवत्वानुपयोगग्राह्यादिधर्मानपरित्यजद् विवर्तते, न घटादिपर्यायविवक्षया ध्रौव्यम्, धर्मद्रव्यमपि सत्त्वामूर्तत्वासङ्ख्येयप्रदेशवत्त्वलोकव्यापित्वादिधर्मात्यागेनावतिष्ठते, न तु परमाणुदेवदत्तादीनां प्रत्येकं गन्तृत्वस्य विवक्षाया गत्युपकारित्वेन नित्यत्वम्, गन्तृभेदाद्धि गत्युपकारित्वं भिद्यते अन्यादृशाकारेण पूर्वः परिणामोऽन्यादृशेनाकारेण पाश्चात्यः, नहि प्रथमतरमुत्पन्नो गत्युपकारित्वपरिणामः सर्वदाऽवतिष्ठते, स्वरूपव्यतिरिक्तवस्तुसम्बन्धितयोपजायमानत्वाद् घटादिवत्, एवमधर्मद्रव्यमपि द्रष्टव्यम्, स्थित्युपकारितया चानित्यत्वभावना, आकाशं तु सत्त्वामूर्तत्वानन्तप्रदेशवत्त्वादिधर्मद्वारेण नित्यम्, अवगाहकापेक्षयाऽवगाहदातृत्वेनानित्यम्, यत्राप्यवगाहकं जीवपुद्गलं नास्ति तत्राप्यगुरुलघ्वादिपर्यायवत्तयाऽवश्यतयैवानित्यताऽभ्युपेया, ते त्वन्ये चान्ये च भवन्ति, अन्यथा तत्र न सत उत्पादव्ययौ नाप्यापेक्षिकाविति न्यूनमेव सल्लक्षणं स्यात्, इमामेव परिणामनित्यतां भाष्येण दर्शयति—

द्रव्यस्य नित्यता

**भा०—यत् सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥**

टी०—यत् सत इत्यादि । सत्त्वादेरन्वयिनोंऽशान्न व्येति न विनश्यति नापि विनङ्क्ष्यति तन्नित्यम्, किं पुनः कारणमप्रवृत्तः कालो नोदाहृतः ? । एवं मन्यते भाष्यकारः—नातीतप्रत्याख्याने वर्तमानः सम्भवति, वर्तमानावधिकमेवातीतत्वम् अतीतासत्त्वे निर्मूलस्य वस्तुनोऽनुत्थानप्रसङ्गात्, तस्मादनादि जीवादि सत्त्वादि, एवं तर्हि भविष्यतो ग्रहणं किमर्थम् ? अत्राप्येवं मन्यते—केचिदविविक्तबुद्धयः प्रत्याख्यापयन्ति न वर्तमानकालावच्छिन्नस्य वस्तुनः कदाचिद् भविष्यत्कालाभिसम्बन्ध इति, तन्निषेधार्थं भविष्यद्ग्रहणम्, अथवा तद्भावेनाव्ययं,

१ 'रिक्तसम्बन्धि' इति क-ख-पाठः । २ 'पुद्गलायनादि तत्रा०' इति ग-पाठः ।

पृथग्भूतरूपाणामत्यन्तभिन्नकालानां च नैकत्वं दृष्टम्, यो वाऽद्य जनित्वा म्रियते यश्च वर्षशतं जीवित्वा मरणमनुभवति न तयोस्तुल्यकालता युक्ता, तथा न घटोत्पादकाल एव विनाशकालः, क्रियाफलानाश्वासप्रसङ्गात्, यदि घटरूपनिर्वृत्त्यनन्तरमेव घटस्य विनाशः ततः क्रियाफले घटे स्यादनाश्वासः, विनष्टेन तेन घटकार्याकरणात्, तस्माद् भिन्नकालावुत्पादविनाशौ। तथाऽर्थान्तरमुत्पादस्थितिभङ्गाः परस्परतः स्वलक्षणभेदात्, आत्मलाभात्मावस्थानात्महानिस्वभावाः खल्वेते, यत्र च स्वलक्षणभेदस्तत्रार्थान्तरता दृष्टा घटपटादिषु, यत्र चानर्थान्तरता न तत्र स्वलक्षणभेदः, यथैकलक्षणवर्तिनि रूप इति। एव भिन्नाभिन्नकालतोत्पादादीनामर्थान्तरत्वमनर्थान्तरता च स्याद्वादप्रक्रियाया सकलप्रमाणाविरोधिनी सिध्यति, नैकान्तवादेषूत्पादादयः सम्भवन्ति, भेदाभेदादिलक्षणानभ्युपगमात्। तस्मादवस्थितमिदम्—उत्पादव्ययध्रौव्ययुक्तं सदिति ॥ २९ ॥

एव प्रपञ्चतः संल्लक्षणमुपपाद्योत्तरसूत्रसम्बन्धाय ग्रन्थमुपचिक्षेप भाष्यकारः—

भा०—अत्राह—गृह्णीमस्तावदेवंलक्षणं सदिति, इदं तु वाच्यं—तत् किं नित्यमाहोस्विदनित्यमिति ?। अत्रोच्यते—

टी०—अत्राहेत्यादि। अत्रावसरे परः प्रश्नयति, प्रतिपादितसल्लक्षणानुमोदनाद्वारेण गृह्णीमस्तावदेवलक्षणं सदित्येवविधस्य सत्त्वमनुमन्यामहे युक्त्यागमभाजः, तावच्छब्दः प्रक्रमावद्योतनार्थः, पूर्वमेव सत्त्वं निश्चेयम्, निश्चिते सत्त्वे पश्चान्नित्यताऽनित्यता च चिन्त्या, एव लक्षणमस्येत्युत्पादादित्रययोगमुल्लिङ्गयति। इतिशब्दो हेत्वर्थः। यस्मात् सत् तस्मात् इद तु वाच्यं—तत् किं नित्यमाहोस्विदनित्यमिति ? तुशब्दस्तस्मादित्यस्यार्थमभिधत्ते, तदिति सत[1] परामर्शः, तत् सत् किं नित्यमनित्यमिति, सप्तसु विकल्पेषु सति सम्भवत्सु प्रश्नद्वयोपन्यासः किमर्थ इति चेत्, उच्यते—द्रव्यास्तिकनयपर्यायास्तिकसम्परिग्रहार्थः, तत्सम्परिग्रहाच्च शेषविकल्पसूचनमवसेयम्, कुतः पुनरियमारेका प्रष्टुः ? उच्यते—सता नित्यानित्यत्वदर्शनात्, सद् व्योमादि नित्य दृष्ट सच्च घटादि अनित्यमतः सन्देहः। अथवा आदाविदमुक्तम्—"नित्यावस्थितान्यरूपाणि" (अ० ५, सू० ३) इति तत्रैव मन्यते—न सर्वं सन्नित्यमरूपग्रहणात् रूपवतस्त्वनित्यत्वमर्थादतो न सत् सर्वं नित्य नाप्यनित्यमितीष्यतेऽवस्थित्यंशाङ्गीकरणेन रूपवदपि नित्यम्। यथाऽऽह भगवान्—"से[2] जहा णामए पंचत्थिकाया सिया" इत्यादि सूत्रम् ॥ अन्यथा तूत्पादव्ययध्रौव्ययुक्त सदित्यन्यापि सल्लक्षण स्यात्, अत इद तु वाच्यम्—तत् किं सर्वथा नित्यमाहोस्वित् स्थित्यशसमाश्रयणेनैव नित्यमिति ?। आचार्यस्तु स्थित्यशमभिप्रेत्याह—अत्रोच्यते ॥

(margin: उत्पादादेर्नित्यानित्यत्वे)

१ 'सल्लक्षण' इति ग पाठ।
२ अथ यथा नाम पञ्चास्तिकाया स्यात्।

## सूत्रम्—तद्भावाव्ययं नित्यम् ॥ ५-३० ॥

टी०—तदित्यनेनाभिसम्बध्यते सत्, तस्य-सतो भवन-भावस्तद्भावः, कर्तरि षष्ठी, तदेव हि सत् तथा तथा भवति जीवादि देवादिरूपेण, न जातुचित् सत्त्वत्यागेनान्यथा भवति, तद्भावादव्ययं तद्भावाव्ययम् अविनाशि नित्यं, नित्यग्रहणात् ध्रौव्यांशपरिग्रहः, "नेर्ध्रुवे त्यप्" (सिद्ध० अ० ६, पा० ३, सू० १७) इति वचनात्, स ह्यन्वयी द्रव्यास्तिकांशः सर्वदा सर्वत्र न विच्छिद्यते, सदाकारेणानुत्पत्तेरविनाशाच्च, भावशब्दोपादानात् परिणामनित्यता गृह्यते, कूटस्थनित्यता त्यज्यते, अन्यथा 'तदव्ययं नित्य'मिति सूत्रं स्यात् । यत् तु न केनचिदाकारेण विक्रियते तदनुपाख्यमेव भवेत्, सत्त्वं च सर्वेषामन्वयिना धर्मेणा सूचकम्, पञ्चास्तिकायव्यापित्वात् तु सत्त्वपरिग्रहः, साक्षाज्जीवस्तावत् सत्त्वं चैतन्यममूर्तत्वमसङ्ख्येयप्रदेशत्वं चाजहत् तथातथापरिणामान्न व्यगात् न व्येति न व्येष्यत्यविनाश्यव्ययो नित्य उच्यते, न पुनर्देवादिपर्यायेणाप्यनन्वयिना नित्यता ध्रौव्यमस्य विद्यते, तथा परमाणुद्व्यणुकादिपुद्गलद्रव्यं सत्त्वमूर्तत्वाजीवत्वानुपयोगग्राह्यादिधर्मानपरित्यजद् विवर्तते, न घटादिपर्यायविवक्षया ध्रौव्यम्, धर्मद्रव्यमपि सत्त्वामूर्तत्वासङ्ख्येयप्रदेशवत्त्वलोकव्यापित्वादिधर्मात्यागेनावतिष्ठते, न तु परमाणुदेवदत्तादीनां प्रत्येकं गन्तृत्वस्य विवक्षाया गत्युपकारित्वेन नित्यत्वम्, गन्तृभेदाद्धि गत्युपकारित्वं भिद्यते अन्यादृशाकारेण पूर्वः परिणामोऽन्यादृशेनाकारेण पाश्चात्यः, नहि प्रथमतरमुत्पन्नो गत्युपकारित्वपरिणामः सर्वदाऽवतिष्ठते, स्वरूपव्यतिरिक्तवस्तुसम्बन्धितयोपजायमानत्वाद् घटादिवत्, एवमधर्मद्रव्यमपि द्रष्टव्यम्, स्थित्युपकारितया चानित्यत्वभावना, आकाशं तु सत्त्वामूर्तत्वानन्तप्रदेशवत्त्वादिधर्मद्वारेण नित्यम्, अवगाहकापेक्षयाऽवगाहदातृत्वेनानित्यम्, यत्राप्यवगाहकं जीवपुद्गलं नास्ति तत्राप्यगुरुलघ्वादिपर्यायवत्तयाऽवश्यतयैवानित्यताऽभ्युपेया, ते त्वन्ये चान्ये च भवन्ति, अन्यथा तत्र न स्वत उत्पादव्ययौ नाप्यापेक्षिकाविति न्यूनमेव सल्लक्षणं स्यात्, इमामेव परिणामनित्यतां भाष्येण दर्शयति—

द्रव्यस्य नित्यता

भा०—यत् सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥

टी०—यत् सत इत्यादि । सत्त्वादेरन्वयिनोंऽशान्न व्येति न विनश्यति नापि विनङ्क्ष्यति तन्नित्यम्, किं पुनः कारणमप्रवृत्त[1] कालो नोदाहृतः ? । एवं मन्यते भाष्यकारः[2]—नातीतप्रत्याख्याने वर्तमानः सम्भवति, वर्तमानानधिकमेवातीतत्वम् अतीतासत्त्वे निर्मूलस्य वस्तुनोऽनुत्थानप्रसङ्गात्, तस्मादनादि जीवादि सत्त्वादि, एवं तर्हि भविष्यतो ग्रहणं किमर्थम् ? अत्राप्येवं मन्यते—केचिदविविक्तबुद्धयः प्रत्याख्यापयन्ति न वर्तमानकालावच्छिन्नस्य वस्तुनः कदाचिद् भविष्यत्कालाभिसम्बन्ध इति, तन्निषेधार्थं भविष्यद्ग्रहणम्, अथवा तद्भावेनाव्ययं,

१ 'रिक्तसम्बन्धि' इति क-ख-पाठः । २ 'पुद्गलाद्यनादि तत्रा०' इति ग-पाठः ।

तेन सदात्मना स्थित्यशेनाविगत परिणामापत्तौ सत्यामपि स्वभावाप्रच्युतेर्नित्यमुच्यते। तमेव च ध्रौव्याशमाश्रित्य समस्तास्तिकायेषु नित्यताव्यवहारः प्रतीयते, अथवा भूतिर्भावः स्वात्मेत्यर्थः। स चासौ भावश्च तद्भावः कश्चासौ? यः सर्वास्ववस्थासु निर्विकारः, शुद्धा द्रव्यास्तिकनयप्रकृतिर-विवक्षितसकलभेदग्रन्थिः, अयो गमनं विरुद्धोऽयो व्ययस्तद्भावस्य च विरुद्धगमनमभावापत्तिः, न व्ययोऽव्ययः, न जातुचित् तद्भावोऽभावो भवतीति वाक्यार्थः, ध्रौव्याभिसम्बन्धाच्च नपुसक-निर्देशः, तद्भावश्चासावव्यय च तद्भावाव्ययम्, किं तत्? प्रकृतत्वादेवंविधविशेषणसामर्थ्याद् ध्रौव्यं नित्यशब्देनाभिधीयते, भाष्ये च यद्यपि भाष्यकृता पञ्चमी प्रदर्शिता विवक्षावशात् तथापि विवक्षितस्यार्थस्याभिन्नत्वात् तृतीयापष्ठ्योर्न दोषः॥ ननु च प्रागपि नित्यावस्थितान्यरूपाणी-त्यत्र (तृतीये) सूत्रे नित्यग्रहणं ध्रौव्यार्थमेव व्याख्यायि भवता, तत् किमर्थमिदमुच्यते 'तद्भा-वाव्यये नित्यम्' इति? अत्रोच्यते–इह नित्यस्य लक्षणमभिधित्सित, लक्षितेन चेह नित्य-त्वेन तत्र व्यवहारः प्रदर्शितः। अपरे त्वेव वर्णयन्ति—द्वे नित्यते, तत्रैका स्वभावाप्रच्युत्या कालत्रयाव्यभिचारिणी नित्यता, अपरा पारम्पर्यप्रवृत्तिनित्यता, तत्र च प्राच्या नित्यतामाश्रित्य नित्यावस्थितान्यरूपाणीति पठितम्, परम्पराप्रवृत्त्यवच्छेदमधिकृत्योत्पादव्ययध्रौव्यसूत्रमध्य-गायीति, एतदपि यत्किञ्चित्, यतस्तद्भावाव्यय नित्यमित्येकमेव नित्य-लक्षण लक्षणान्तरानभिधानाच्च कथं द्वे नित्यते? नित्यप्रहसितादिषु दृष्टेति चेत्, तदयुक्तम्, अभीक्ष्णार्थाभिधायित्वादर्थान्तरवृत्तिस्तत्र नित्यशब्द', तत्त्वविचारप्रस्तावे च न किञ्चिदुपचारेण प्रयोजनम्, अतो व्यवस्थितमेव लक्षणं तद्भावाव्यय नित्यमिति॥ एवमन्वय्यशो नित्यत्वेन लक्षितो द्रव्यनयस्वभावः। पर्यायनयस्वभावौ तूत्पादविनाशावभूतभावभूताभावलक्षणावुक्तन्यायेन स्थित्यशप्रतिबद्धौ। स्थितिरपि पर्यायप्रतिबद्धा, सर्वदा ससर्गरूपत्वाद् वस्तुनः, एवमेकाधिकरणावुत्पादविनाशौ जैन एव शासने साङ्गत्यमनुभवतोऽन्यत्र तु व्यधिकरणावेवोत्पादविनाशौ नियतौ चेति॥ नन्वेवमपि यथा तद् द्रव्यमात्मापरित्यागात् तथोत्पादविनाशलक्षणः पर्यायोऽपि आत्मभूतो द्रव्यस्येत्यतः पर्यायनिवृत्तिवद् द्रव्यनिवृत्तिप्रसङ्ग इति। अत्रोच्यते–स्यादेतदेव, यदि घटादिनिवृत्तौ मृन्निवृत्तिर्दृश्येत, मृन्नि-वृत्तौ वा पुद्गलनिवृत्ति., न च दृश्यते मृदोऽन्वयिन्याः पुद्गलजातेर्वा कस्याचिदवस्थायां निवृत्तिस्तदभिधानप्रत्ययव्यवहार्यत्वात्, घटादिनिवृत्तौ वा यदि न किञ्चित् पश्चादुपलभ्येत श्रद्धीत विद्वज्जन' पर्यायनिवृत्तौ द्रव्याशनिवृत्ति', न च प्रत्यक्षविरोधे तर्कः क्रमत इत्यपकर्ण्यमेतत्, एवमुपपत्त्यागमाभ्यामवस्थित तद्भावाव्यय नित्यमिति॥ ३०॥

नित्यसूत्रफलम्

द्रव्यपर्यायाभ्या नित्यानित्यत्वे

एव सूत्रद्वयेन निरूपिते समस्ते वस्तुन्यर्थाभिधानप्रत्ययरूपे स्थित्युत्पत्तिव्ययस्वभावे पुनर्विस्तरविशेषार्थी पर आरेकते, यद् व्येत्युत्पद्यते च तत् सन्नित्य चेत्यतिसाहसम्, अथवा न किञ्चिदसदनित्य वा, सन्नित्यत्वाभ्या निराकृतत्वात्, ततो लोकव्यवहारोच्छेदः, तदेतद्

दुरुपपादत्वात् दुःश्रद्धानत्वाचासङ्गतम्, नित्यता ह्युत्पादव्ययौ विरुणद्धि, उत्पादव्ययौ च नित्यता विरुन्धाते, सोऽयं छायातपवदसहानवस्थानलक्षणविरोधाप्रातपक्षो न विद्वज्जनमनांसि प्रीणयतीति, अत्रोच्यते—श्रद्धत्तां भवानुपपाद्यमानं यथा न कश्चिद् विरोधः समस्ति, यथा चात्र लोकव्यवहारसङ्गतिर्द्रव्यास्तिकपर्यायास्तिकनयसम्भवेऽन्यतरप्रधानगुणभावविवक्षाप्रापिते उभे अपि सन्नित्यत्वे तत्प्रतिपक्षभूते चाऽसदनित्यत्वे ॥

## सूत्रम्—अर्पितानर्पितसिद्धेः ॥ ५-३१ ॥

टी०—अपरेऽन्यथाकारं सूत्रसम्बन्धमभिदधते, ध्रौव्यस्य नित्यपर्यायत्वेन लक्षणमुक्तमुत्पादव्ययोरुच्यताम्, नोच्यते, तयोर्लोकप्रतीतत्वात्, सामर्थ्यगतेश्चासदनित्यत्वादीनाम्, अतस्तल्लक्षणं न साक्षाद् वाच्यम्, किं कारणम् ?

भा०—अर्पितानर्पितसिद्धेः ॥

टी०—अर्पितं निदर्शितमुपात्तं, तद्विपरीतमनर्पितम्, सिद्धिः—ज्ञानम्, अर्पितेनानर्पितपरिज्ञानमर्पितानर्पितसिद्धिस्तस्याः—ततो हेतोरर्पितानर्पितसिद्धेः,विशेष्यं हि वस्तु नीलोत्पलादिवदुपादीयमानं नियमकारिविशेषणधर्मप्रत्यनीकपर्यायाश्रयतामनु-

अर्पितानर्पितस्वरूपम्

भवत्येवेति न्यायात्, एवमिहापि ध्रौव्यलक्षणेऽर्पितेऽनर्पितावपि साक्षात् तद्विपरीतावुत्पादव्ययौ सङ्गस्येते, पूर्वमुत्तरं च पर्यायं ध्रौव्यमासादयति, न तूत्पादलक्षणः पर्यायो विनाशलक्षणो वा पूर्वोत्तरपर्यायानुभावी, तस्माद् विलक्षणावुत्पादव्ययाविति सुज्ञानम्, एवं सम्बन्धद्वयमभिधाय सूत्रार्थोऽभिधीयते, पूर्वकं सम्बन्धमाश्रित्येदं भाष्यम्—

भा०—सच्च त्रिविधमपि नित्यं चोभे अपि अर्पितानर्पितसिद्धेः ॥

टी०—चशब्दः समुच्चये, अपिः सम्भावने । सत् त्रिविधमुत्पादव्ययस्थितिलक्षणम्, नित्यं च द्वितीयसूत्रोक्तमुभयमप्येतदर्पणानर्पणाभ्यां सिद्धमव्याहतम् अनेकधर्मा धर्मी, तत्र प्रयोजनवशात् कदाचित् कश्चिद् धर्मो वचनेनार्प्यते—विवक्ष्यते, सन्नपि च कश्चिन्न विवक्ष्यते प्रयोजनाभावात्, न पुनः स धर्मी विवक्षितधर्ममात्र एव । इत्यतः सत्पर्यायविवक्षाया सदुत्पादादिस्थित्यंशविवक्षाया नित्यमसदप्युत्पादाद्यनित्यं च, सत्त्वासत्त्व-

विवक्षामुख्यता

विशिष्टग्रहणात् सर्वदा वस्तुनः येन प्रमाणेन यद् वस्तु सद्विशिष्टं गृह्यते, तेनैव प्रमाणेन तदेव तदेव वाऽसद्विशिष्टमपि गृह्यते, अन्यथा त्वविविक्तग्रहणमेव स्यात्, विविक्ताश्च चक्षुरादिबुद्धयोऽनुभूयन्ते । यथैव हि स्वास्तित्वात् सद्विशेषणोल्लेखेन सद्बुद्धिरभिधावति, एवं असद्विशेषणावष्टम्भजनिताऽपीति ॥ न चोपहतेन्द्रियस्याव्यापृतेन्द्रियस्य वा वस्त्वन्तराभावविशिष्टं ग्रहणमुपजायते तत इन्द्रियव्यापारे सति भावादसद्विशिष्टस्य ग्रहणस्य नापह्नवो यु-

तेन सदात्मना स्थित्यंशेनाविगत परिणामापत्तौ सत्यामपि स्वभावाप्रच्युतेर्नित्यमुच्यते । तमेव च ध्रौव्यांशमाश्रित्य समस्तास्तिकायेषु नित्यताव्यवहारः प्रतीयते, अथवा भूतिर्भावः स्वात्मेत्यर्थः । स चासौ भावश्च तद्भावः कश्चासौ ? यः सर्वास्ववस्थासु निर्विकारः, शुद्धा द्रव्यास्तिकनयप्रकृतिर्विवक्षितसकलभेदग्रन्थिः, अयो गमनं विरुद्धोऽयो व्ययस्तद्भावस्य च विरुद्धगमनमभावापत्तिः, न व्ययोऽव्ययः, न जातुचित् तद्भावोऽभावो भवतीति वाक्यार्थः, ध्रौव्याभिसम्बन्धाच्च नपुंसकनिर्देशः, तद्भावश्चासावव्यय च तद्भावाव्ययम्, किं तत् ? प्रकृतत्वादेवंविधविशेषणसामर्थ्याद् ध्रौव्यं नित्यशब्देनाभिधीयते, भाष्ये च यद्यपि भाष्यकृता पञ्चमी प्रदर्शिता विवक्षावशात् तथापि विवक्षितस्यार्थस्याभिन्नत्वात् तृतीयाषष्ठ्योर्न दोषः ॥ ननु च प्रागपि नित्यावस्थितान्यरूपाणीत्यत्र (तृतीये) सूत्रे नित्यग्रहणं ध्रौव्यार्थमेव व्याख्यायि भवता, तत् किमर्थमिदमुच्यते 'तद्भावाव्ययं नित्यम्' इति ? अत्रोच्यते–इह नित्यस्य लक्षणमभिधित्सितं, लक्षितेन चेह नित्यत्वेन तत्र व्यवहारः प्रदर्शितः । अपरे त्वेवं वर्णयन्ति—द्वे नित्यते, तत्रैका स्वभावाप्रच्युत्या कालत्रयाव्यभिचारिणी नित्यता, अपरा पारम्पर्यप्रवृत्तिनित्यता, तत्र च प्राच्यां नित्यतामाश्रित्य नित्यावस्थितान्यरूपाणीति पठितम्, परम्परावृत्त्यव्यवच्छेदमधिकृत्योत्पादव्ययध्रौव्यसूत्रमध्यगायीति, एतदपि यत्किञ्चित्, यतस्तद्भावाव्ययं नित्यमित्येकमेव नित्यलक्षणं लक्षणान्तरानभिधानाच्च कथं द्वे नित्यते ? नित्यप्रहसितादिषु दृष्टेति चेत्, तदयुक्तम्, अभीक्ष्णार्थाभिधायित्वादर्थान्तरवृत्तिस्तत्र नित्यशब्दः, तत्त्वविचारप्रस्तावे च न किञ्चिदुपचारेण प्रयोजनम्, अतो व्यवस्थितमेव लक्षणं तद्भावाव्ययं नित्यमिति ॥ एवमन्वय्यंशो नित्यत्वेन लक्षितो द्रव्यनयस्वभावः । पर्यायनयस्वभावौ तूत्पादविनाशावभूतभावभूताभावलक्षणावुक्तन्यायेन स्थित्यंशप्रतिबद्धौ । स्थितिरपि पर्यायप्रतिबद्धा, सर्वदाससर्गरूपत्वाद् वस्तुनः, एवमेकाधिकरणावुत्पादविनाशौ जैन एव शासने साङ्गत्यमनुभवतोऽन्यत्र तु व्यधिकरणावेवोत्पादविनाशौ नियतौ वेति ॥ नन्वेवमपि यथा तद् द्रव्यमात्मापरित्यागात् तथोत्पादविनाशलक्षणः पर्यायोऽपि आत्मभूतो द्रव्यस्येत्यतः पर्यायनिवृत्तिवद् द्रव्यनिवृत्तिप्रसङ्ग इति । अत्रोच्यते–स्यादेतदेवं, यदि घटादिनिवृत्तौ मृन्निवृत्तिर्दृश्येत, मृन्निवृत्तौ वा पुद्गलनिवृत्तिः, न च दृश्यते मृदोऽन्वयिन्याः पुद्गलजातेर्वा कस्याञ्चिदवस्थायां निवृत्तिस्तदभिधानप्रत्ययव्यवहार्यत्वात्, घटादिनिवृत्तौ वा यदि न किञ्चित् पश्चादुपलभ्येत श्रद्दधीत विद्वज्जनः पर्यायनिवृत्तौ द्रव्याशनिवृत्तिं', न च प्रत्यक्षविरोधे तर्कः क्रमत इत्यपकर्ण्यमेवत्, एवमुपपत्त्यागमाभ्यामवस्थितं तद्भावाव्ययं नित्यमिति ॥ ३० ॥

नित्यसूत्रफलम्

द्रव्यपर्यायाभ्यां नित्यानित्यत्वे

एवं सूत्रद्वयेन निरूपिते समस्ते वस्तुन्यर्थाभिधानप्रत्ययरूपे स्थित्युत्पत्तिव्ययस्वभावे पुनर्विस्तरविशेषार्थी पर आरेकते, यद् व्येत्युत्पद्यते च तत् सन्नित्यं चेत्यतिसाहसम्, अथवा न किञ्चिदसदनित्यं वा, सन्नित्यत्वाभ्यां निराकृतत्वात्, ततो लोकव्यवहारोच्छेदः, तदेतद्

दुरुपपादत्वात् दुःश्रद्धानत्वाचासङ्गतम्, नित्यता ह्युत्पादव्ययौ विरुणद्धि, उत्पादव्ययो च नित्यता निरुन्धाते, सोऽय छायातपत्रदमहानस्थानलक्षणविरोधाघ्रातपत्रो न विद्वज्जनमनासि प्रीणयतीति, अत्रोच्यते—श्रद्धत्ता भवानुपपाद्यमान यथा न कश्चिद् विरोधः समस्ति, यथा चात्रैव लोकव्यवहारसङ्गतिर्द्रव्यास्तिकपर्यायास्तिकनयसम्भवेऽन्यतरप्रधानगुणभावविवक्षाप्रापिते उभे अपि सन्नित्यत्वे तत्प्रतिपक्षभूते वाऽसदनित्यत्वे ॥

## सूत्रम्—अर्पितानर्पितसिद्धेः ॥ ५-३१ ॥

टी०—अपरेऽन्यथाकार सूत्रसम्बन्धमभिदधते, ध्रौव्यस्य नित्यपर्यायत्वेन लक्षणमुक्तमुत्पादव्यययोरुच्यताम्, नोच्यते, तयोर्लोकप्रतीतत्वात्, सामर्थ्यगतेश्चासदनित्यत्वादीनाम्, अतस्तल्लक्षण न साक्षाद् वाच्यम्, किं कारणम् ?

भा०—अर्पितानर्पितसिद्धेः ॥

टी०—अर्पित निदर्शितमुपात्त, तद्विपरीतमनर्पितम्, सिद्धिः—ज्ञानम्, अर्पितेनानर्पितपरिज्ञानमर्पितानर्पितसिद्धिस्तस्याः—ततो हेतोरर्पितानर्पितसिद्धेः, विशेष्य हि वस्तु नीलोत्पलादिवदुपादीयमान नियमकारिविशेषणधर्मप्रत्यनीकपर्यायाश्रयतामनु-

अर्पितानर्पितस्वरूपम् भवत्येवेति न्यायात्, एवमिहापि ध्रौव्यलक्षणेऽर्पितेऽनर्पितावपि साक्षात् तद्विपरीतावुत्पादव्ययौ सङ्गस्येते, पूर्वमुत्तर च पर्याय ध्रौव्यमासादयति, न तूत्पादलक्षण पर्यायो विनाशलक्षणो वा पूर्वोत्तरपर्यायानुभावी, तस्माद् विलक्षणावुत्पादव्ययाविति सुज्ञानम्, एव सम्बन्धद्वयमभिधाय सूत्रार्थोऽभिधीयते, पूर्वक सम्बन्धमाश्रित्येद भाष्यम्—

भा०—सच्च त्रिविधमपि नित्यं चोभे अपि अर्पितानर्पितसिद्धेः ॥

टी०—चशब्दः समुच्चये, अपिः सम्भावने । सत् त्रिविधमुत्पादव्ययस्थितिलक्षणम्, नित्य च द्वितीयसूत्रोक्तमुभयमप्येतदर्पणानर्पणाभ्या सिद्धमव्याहतम् अनेकधर्मा धर्मी, तत्र प्रयोजनवशात् कदाचित् कश्चिद् धर्मो वचनेनार्प्यते—विवक्ष्यते, सन्नपि च कश्चिन्न विवक्ष्यते प्रयोजनाभावात्, न पुनः स धर्मी विवक्षितधर्ममात्र एव । इत्यतः सत्पर्यायविवक्षाया सदुत्पादादिस्थित्यंशविवक्षाया नित्यमसदप्युत्पादाद्यनित्य च, सत्त्वासत्त्व-

विवक्षामुख्यता विशिष्टग्रहणात् सर्वदा वस्तुनः येन प्रमाणेन यद् वस्तु सद्विशिष्ट गृह्यते, तेनैव प्रमाणेन तदेव तदैव वाऽसद्विशिष्टमपि गृह्यते, अन्यथा त्वविविक्तग्रहणमेव स्यात्, विविक्ताश्च चक्षुरादिबुद्धयोऽनुभूयन्ते । यथैव हि स्वास्तित्वात् सद्विशेषणोल्लेखेन सद्बुद्धिरभिधानाति, एव असद्विशेषणावष्टम्भजनिताऽपीति ॥ न चोपहतेन्द्रियस्याव्यापृतेन्द्रियस्य वा वस्त्वन्तराभावविशिष्ट ग्रहणमुपजायते तत इन्द्रियव्यापारे सति भावादसद्विशिष्टस्य ग्रहणस्य नापह्नवो यु-

तेन सदात्मना स्थित्यंशेनाविगत परिणामापत्तौ सत्यामपि स्वभावाप्रच्युतेर्नित्यमुच्यते । तमेव च ध्रौव्यांशमाश्रित्य समस्तास्तिकायेषु नित्यताव्यवहारः प्रतीयते, अथवा भूतिर्भावः स्वात्मेत्यर्थः । स चासौ भावश्च तद्भावः कश्चासौ ? यः सर्वास्ववस्थासु निर्विकारः, शुद्धा द्रव्यास्तिकनयप्रकृतिरविवक्षितसकलभेदग्रन्थिः, अयो गमनं विरुद्धोऽयो व्ययस्तद्भावस्य च विरुद्धगमनमभावापत्तिः, न व्ययोऽव्ययः, न जातुचित् तद्भावोऽभावो भवतीति वाक्यार्थः, ध्रौव्याभिसम्बन्धाच्च नपुंसकनिर्देशः, तद्भावश्चासावव्यय च तद्भावाव्ययम्, किं तत् ? प्रकृतत्वादेवंविधविशेषणसामर्थ्याद् ध्रौव्यं नित्यशब्देनाभिधीयते, भाष्ये च यद्यपि भाष्यकृता पञ्चमी प्रदर्शिता विवक्षावशात् तथापि विवक्षितस्यार्थस्याभिन्नत्वात् तृतीयाषष्ठ्योर्न दोषः ॥ ननु च प्रागपि नित्यावस्थितान्यरूपाणीत्यत्र (तृतीये) सूत्रे नित्यग्रहण ध्रौव्यार्थमेव व्याख्यायि भवता, तत् किमर्थमिदमुच्यते 'तद्भावाव्यये नित्यम्' इति ? अत्रोच्यते–इह नित्यस्य लक्षणमभिधित्सित, लक्षितेन चेह नित्यत्वेन तत्र व्यवहारः प्रदर्शितः । अपरे त्वेव वर्णयन्ति—द्वे नित्यते, तत्रैका स्वभावाप्रच्युत्या कालत्रयाव्यभिचारिणी नित्यता, अपरा पारम्पर्यप्रवृत्तिनित्यता, तत्र च प्राच्या नित्यतामाश्रित्य नित्यावस्थितान्यरूपाणीति पठितम्, परम्पराप्रवृत्त्यव्यवच्छेदमधिकृत्योत्पादव्ययध्रौव्यसूत्रमध्यगायीति, एतदपि यत्किञ्चित्, यतस्तद्भावाव्यय नित्यमित्येकमेव नित्यलक्षणं लक्षणान्तरानभिधानाच्च कथं द्वे नित्यते ? नित्यप्रहसितादिषु दृष्टेति चेत्, तदयुक्तम्, अभीक्ष्णार्थाभिधायित्वादर्थान्तरवृत्तिस्तत्र नित्यशब्दः, तत्त्वविचारप्रस्तावे च न किञ्चिदुपचारेण प्रयोजनम्, अतो व्यवस्थितमेव लक्षण तद्भावाव्यय नित्यमिति ॥ एवमन्वय्यंशो नित्यत्वेन लक्षितो द्रव्यनयस्वभावः । पर्यायनयस्वभावौ तूत्पादविनाशावभूतभावभूताभावलक्षणावुक्तन्यायेन स्थित्यंशप्रतिबद्धौ । स्थितिरपि पर्यायप्रतिबद्धा, सर्वदा ससर्गरूपत्वाद् वस्तुनः, एवमेकाधिकरणावुत्पादविनाशौ जैन एव शासने साङ्गत्यमनुभवतोऽन्यत्र तु व्यधिकरणावेवोत्पादविनाशौ नियतौ वेति ॥ नन्वेवमपि यथा तद् द्रव्यमात्मापरित्यागात् तथोत्पादविनाशलक्षणः पर्यायोऽपि आत्मभूतो द्रव्यस्येत्यतः पर्यायनिवृत्तिवद् द्रव्यनिवृत्तिप्रसङ्ग इति । अत्रोच्यते–स्यादेतदेव, यदि घटादिनिवृत्तौ मृन्निवृत्तिर्दृश्येत, मृन्निवृत्तौ वा पुद्गलनिवृत्तिः, न च दृश्यते मृदोऽन्वयिन्याः पुद्गलजातेर्वा कस्याचिदवस्थायां निवृत्तिस्तदभिधानप्रत्ययव्यवहार्यत्वात्, घटादिनिवृत्तौ वा यदि न किञ्चित् पश्चादुपलभ्येत श्रद्दधीत विद्वज्जनः पर्यायनिवृत्तौ द्रव्याशनिवृत्ति', न च प्रत्यक्षविरोधे तर्क' क्रमत इत्यपकर्ण्यमेतत्, एवमुपपत्त्यागमाभ्यामवस्थित तद्भावाव्यय नित्यमिति ॥ ३० ॥

नित्यसूत्रफलम्

द्रव्यपर्यायाभ्यां नित्यानित्यत्वे

एव सूत्रद्वयेन निरूपिते समस्ते वस्तुन्यर्थाभिधानप्रत्ययरूपे स्थित्युत्पत्तिव्ययस्वभावे पुनर्विस्तरविशेषार्थी पर आरेकते, यद् व्येत्युत्पद्यते च तत् सन्नित्यं चेत्यतिसाहसम्, अथवा न किञ्चिदसदनित्य वा, सन्नित्यत्वाभ्या निराकृतत्वात्, ततो लोकव्यवहारोच्छेदः, तदेतद्

रोधः, संयोगस्यानेकाश्रयत्वात् द्वित्वादिवत्, न चासंयुक्तो नकुलः सर्पविनाशे प्रभुः, यदि स्यात् ततः समस्तत्रैलोक्योदरवर्तिसर्पाभावप्रसङ्गः, अग्निजलयोरप्येवमेव भावना, वाडवाग्नेर्वारिधिवारिणश्चैकत्रावस्थान दृष्टमिति चेत्, हन्त हतस्तर्हि विरोधः, प्रकृतमुच्यते–संयोगे पुनः क्षणमात्रावस्थायिनोरुत्तरकालमेकस्य बलवत्त्वाद् घातकत्वे सतीतरस्य दुर्बलत्वाद् वध्यत्वे स्याद् विरोधः, न चैव सदसतोर्नित्यानित्ययोर्वा क्षणमात्रमप्येकत्र वृत्तिस्त्वयाऽभ्युपेयते, गुणविषये संयोगाभावान्नापि समवायवृत्तिर्निरोधाभावप्रसङ्गात्, तस्मान्न नित्यानित्यसदसदादीनामेकवस्त्वाश्रयताया वध्यघातकभावलक्षणो विरोध' समस्ति, नाप्यसहावस्थानलक्षणो विरोधः, स हि शीतोष्णवत् फलवृन्तसंयोगविभागवदाम्रफलादिषु श्यामतापीततावद् वा, तथाहि शीतपर्यायोऽश्मादीना प्राग् वा विद्यमानः पश्चादुपजायमानेनोष्णपर्यायेण सह नावतिष्ठते, तथोष्णः शीतेनोपजायमानेन सह विरुध्यते, न चैव प्रागवस्थित नित्यत्वमनित्यत्वेन पश्चात्कालभाविना विनाश्यते, तद्धि नित्यत्वमेव न स्यादध्रुवत्वात्, नापि नित्यत्वेनोत्पत्तिभाजा पूर्वावस्थितमनित्यत्वं विनाश्यते, तत् तु नित्यत्वमेव न स्यादुत्पद्यमानत्वात्, अपिच क्षणनश्वरेषु भावेषु न कदाचिदय विरोधः समस्ति, नहि तत्रानित्यत्वस्य पूर्वमवस्थानम्, तेन ह्यनित्यत्वेन नाशिते वस्तुनि निराधारस्य नित्यत्वस्याभाव एव, अवश्यतयाऽसहावस्थानलक्षणविरोधवादिना तत्रान्यतरस्योत्पद्यमानता अन्यतरस्य च पूर्वावस्थितिरभ्युपेया, अन्यथाऽसहावस्थानलक्षणविरोधवार्त्तैव न स्यात्, येषामपि किञ्चित् कालं स्थित्वा घटो विनश्यति तैरपीद वक्तव्यम्–यावदसौ न विनश्यति तावत् किं नित्यः उतानित्य इति ?। नित्यश्चेद् व्योमादिवदनुच्छेदप्रसङ्गः, इतरत्र त्वभावप्रसङ्गः, अवश्यमेव सता नित्येनानित्येन वा भवितव्यमेकान्तवादिनाम्, अनेकान्तवादिना तूभयस्वभावत्वाद् वस्तुनो न किञ्चिदघटमानकम्, एवमेव फलवृन्तयोः संयोगविनाशे विभाग उपजायते फलादिषु श्यामताऽपैति पीततोत्पद्यत इति विकल्प्य निरसनीयम्, एवमेते विकल्पाः पूर्वकेण विरोधलक्षणेन सङ्गता अपीह स्यात्कारोपलाञ्छनप्रक्रियाया न सम्भवन्ति । अपिचैकत्रावस्थान न दृश्यत इति किमेकस्मिन् धर्मिणि नास्ति, यद्येव ततोऽसिद्धता, दृष्ट एक एवाश्मा शीतश्चोष्णश्च । अथ यत्र देशे शीतो न तत्रैवोष्ण इति, एतदप्यसत्, नहि शिशिरस्पर्शमुदकं भिन्नदेशवर्त्यसंयुक्तमेवाग्निं विध्यापयति, संयोगश्चैकदेशवर्तित्वे जलानलपरमाणूना सिद्ध्यति, अन्यथा च त्रैलोक्येऽप्यग्न्यभावप्रसङ्गः, सति च संयोगे क्षणमात्रावस्थानमेकत्र दृष्टमेव तदा कुतो विरोधः ?। उत्तरकालमदर्शनाद् विरोध इति चेत्, अत एव कदाचिद् विरोधः कदाचिदविरोध इति स्याद्वादाश्रयणमपदोषम् ॥ अथैकस्मिन्नेवाग्निद्रव्ये उष्णतानुष्णते युगपन्न स्तः, इत्येतदप्यसारम् । यतः स्पर्शपर्यायेणाग्निरुष्णोऽभिधीयते रूपपर्यायेण त्वनुष्ण

नित्यानित्यत्वयो सहावस्थानविरोधाभाव

१ 'पूर्वावस्थानम्' इति क ख पाठ ।

ज्यते, यथा प्रकाशकाः कृशानुभास्करादयः प्राकाश्यं वस्त्वन्तराभावविशिष्टमेव प्रकाशयन्ति, एव प्रमाणमपि वस्तुपरिच्छेदहेतुत्वेन व्याप्रियमाण वस्त्वन्तराभावविशिष्टमेव प्रकाशयति। प्रमाण च यथावस्थितवस्तुस्वभावग्राहि। ततः प्रमाणपरिच्छिन्नेनार्थेन यथाप्रयोजनमर्पणादिव्यवहारः। तस्मात् सच्चासच्चैकमेव वस्तु, स्वरूपार्पणयोत्पादः सन् स्थितिविनाशाभावविशिष्टग्रहणादसन्, एव स्थितिविनाशावपि वाच्यौ। एव हि त्रिविधग्रहण समर्थित भवति॥ तथा स्वात्मापरित्यागार्पणान्नित्यम्, उत्पादव्ययार्पणात् तदेवानित्यम्, स्थित्यादयश्च सङ्ग्रहादेकीभावाद् वस्तु, न स्थितिरहितावुत्पादविनाशौ, नाप्युत्पादव्ययशून्या स्थिति', अतः ससर्गलक्षण वस्त्वेकमेव नित्य चानित्य च॥ ननु चोत्पादव्ययध्रौव्ययुक्त सदिति त्रिस्वभावमेव सत्त्वेनावधृतम्, भाष्यकारस्तु सच्च त्रिविधमपीत्येव विवृण्वन्नेकैकस्य सत्त्व प्रतिपादयति, नैष दोषः, अविभक्तेऽपि वस्तुनि स्वभावत्रयाख्यानमन्योन्यापरित्यागद्वारेणैव क्रियते, अन्यथा कथ कथ्येत प्रज्ञापनागोचरः? । स्थित्यादयो हि परस्परावियोगिनः सर्वदा सदसदात्मका भेदाभेद लक्षणास्तेषु सत्त्वप्रज्ञापना न विरुध्यते, न ह्येकदेशोऽसद्वस्तुनो भवति पटादेस्तन्त्वादिः, अथ नित्यं चेति किमर्थमुच्यते, सद्ग्रहणादेव तद्गृहीतेः पुनर्न किञ्चित् फलमस्ति सद्ग्रहणेनैव ध्रौव्याशस्य लक्षितत्वात्, सच्च त्रिविधमपीत्येतावदेवाभिधेयमिति, अत्रोच्यते—सत्यमेतदेवम्, तथाऽप्यर्थविशेषप्रतिपिपादयिषया पुनर्नित्यग्रहण, स विशेषो भाव्यते यदि ध्रौव्याश एव नित्य' स्यात् न समस्त वस्तु तत उत्पादव्ययावप्यनित्यौ न वस्तु सकलम्, एव चान्याधार नित्यत्वमन्याधार चानित्यत्व स्याद् अनिष्ट चैतद् व्यधिकरणत्वात्, यथा प्रवचनबाह्याना नित्य व्योमाऽनित्यो घट इति, अत्राप्येव स्यादन्यन्नित्यमन्यच्चानित्यम्, इष्यते तु यदेव नित्य तदेवानित्यमिति, तत्राऽमुना पुनर्नित्यग्रहणेन निरश वस्त्वर्प्यत एतद्विपक्षेण चानित्य समस्तमेव वस्तूच्यते निर्विभागत्वात्, एव हि तत् प्रज्ञाप्यते केवल श्रोतृबुद्धिव्युत्पत्तये स्थित्यशोऽयमिमावुत्पादव्ययाशाविति बुद्ध्या विभज्यते, न तु परमार्थतोऽस्ति विभाग इत्येवमैकाधिकरण्यम्। यथाऽऽह—

"अभिन्नाश मत वस्तु, तथोभयमयात्मकम्।
प्रतिपत्तेरुपायेन, नयभेदेन कथ्यते॥ १॥"

यत् तूक्तं नित्यता ह्युत्पादव्ययौ विरुणद्ध्युत्पादव्ययौ च नित्यता विरुन्धाते, तत् प्रपञ्चयापोद्यते, कः पुनर्विरोधशब्दार्थः? । किं ययोरेकत्रावस्थान न दृश्यते तौ विरुद्धावथ यावेकत्र कालान्तर स्थितौ पश्चादन्यतरविनाश उभयविनाशो वा तौ विरुद्धाविति? किञ्चात, यदि प्राच्य पक्षः कदाचिदपि यावेकत्र न दृष्टावेव सति वध्यघातकभावलक्षणस्तावदाहिनकुलयोरग्न्युदकयोर्वा न विरोध, यत. सयोगे सत्येककालयोरहिनकुलयोरग्निजलयोर्वा स्थितयोर्वि-

१ 'सत्त्वासत्त्वैकमेव' इति क-ख पाठ। २ 'सवात्मना' इति ग पाठ।

रोधः, संयोगस्यानेकाश्रयत्वात् द्वित्वादिवत्, न चासंयुक्तो नकुलः सर्पविनाशे प्रभुः, यदि स्यात् ततः समस्तत्रैलोक्योदरवर्तिसर्पाभावप्रसङ्गः, अग्निजलयोरप्येवमेव भावना, वाडवाग्नेर्वारिधिवारिणश्चैकत्रावस्थानं दृष्टमिति चेत्, हन्त हतस्तर्हि विरोधः, प्रकृतमुच्यते—संयोगे पुनः क्षणमात्रावस्थायिनोरुत्तरकालमेकस्य बलवत्वाद् घातकत्वे सतीतरस्य दुर्बलत्वाद् वध्यत्वे स्याद् विरोधः, न चैवं सदसतोर्नित्यानित्ययोर्वा क्षणमात्रमप्येकत्र वृत्तिस्त्वयाऽभ्युपेयते, गुणविपर्ये संयोगाभावान्नापि समवायवृत्तिर्विरोधाभावप्रसङ्गात्, तस्मान्न नित्यानित्यसदसदादीनामेकवस्त्वाश्रयतया वध्यघातकभावलक्षणो विरोधः समस्ति, नाप्यसहावस्थानलक्षणो विरोधः, स हि शीतोष्णवत् फलवृन्तसंयोगविभागवदाम्रफलादिषु श्यामतापीततावद् वा, तथाहि शीतपर्यायोऽश्मादीनां प्राग् वा विद्यमानः पश्चादुपजायमानेनोष्णपर्यायेण सह नावतिष्ठते, तथोष्णः शीतेनोपजायमानेन सह निरुध्यते, न चैवं प्रागवस्थितं नित्यत्वमनित्यत्वेन पश्चात्कालभाविना विनाश्यते, तद्धि नित्यत्वमेव न स्यादध्रुवत्वात्, नापि नित्यत्वेनोत्पत्तिभाजा पूर्वावस्थितमनित्यत्वं विनाश्यते, तत् तु नित्यत्वमेव न स्यादुत्पद्यमानत्वात्, अपिच क्षणनश्वरेषु भावेषु न कदाचिदयं विरोधः समस्ति, नहि तत्रानित्यत्वस्य पूर्वमवस्थानम्, तेन ह्यनित्यत्वेन नाशिते वस्तुनि निराधारस्य नित्यत्वस्याभाव एव, अवश्यतयाऽसहावस्थानलक्षणविरोधवादिना तत्रान्यतरस्योत्पद्यमानता अन्यतरस्य च पूर्वावस्थितिरभ्युपेया, अन्यथाऽसहावस्थानलक्षणविरोधवार्तैव न स्यात्, येषामपि किञ्चित् कालं स्थित्वा घटो विनश्यति तैरपीदं वक्तव्यम्—यावदसौ न विनश्यति तावत् किं नित्यः उतानित्य इति ? । नित्यश्चेद् व्योमादिवदनुच्छेदप्रसङ्गः, इतरत्र त्वभावप्रसङ्गः, अवश्यमेव सता नित्येनानित्येन वा भवितव्यमेकान्तवादिनाम्, अनेकान्तवादिनां तूभयस्वभावत्वाद् वस्तुनो न किञ्चिदघटमानकम्, एवमेव फलवृन्तयोः संयोगविनाशे विभाग उपजायते फलादिषु श्यामताऽपैति पीततोत्पद्यत इति विकल्प्य निरसनीयम्, एवमेते विकल्पाः

नित्यानित्यत्वयो सहावस्थानविरोधाभाव

पूर्वकेण विरोधलक्षणेन सङ्गता अपीह स्यात्कारोपलाञ्छनप्रक्रियया न सम्भवन्ति । अपिचैकत्रावस्थानं न दृश्यत इति किमेकस्मिन् धर्मिणि नास्ति, यद्येवं ततोऽसिद्धता, दृष्ट एक एवाश्मा शीतश्चोष्णश्च । अथ यत्र देशे शीतो न तत्रैवोष्ण इति, एतदप्यसत्, नहि शिशिरस्पर्शमुदकं भिन्नदेशवर्त्यसंयुक्तमेवाग्निं विध्यापयति, संयोगश्चैकदेशवर्तित्वे जलानलपरमाणूनां सिद्ध्यति, अन्यथा च त्रैलोक्येऽप्यग्न्यभावप्रसङ्गः, सति च संयोगे क्षणमात्रावस्थानमेकत्र दृष्टमेव तदा कुतो विरोधः[1] । उत्तरकालमदर्शनाद् विरोध इति चेत्, अत एव कदाचिद् विरोधः कदाचिदविरोध इति स्याद्वादाश्रयणमपदोषम् ॥ अथैकस्मिन्नेवाग्निद्रव्ये उष्णतानुष्णते युगपन्न स्तः, इत्येतदप्यसारम् । यतः स्पर्शपर्यायेणाग्निरुष्णोऽभिधीयते रूपपर्यायेण त्वनुष्ण

1 'पूर्वावस्थानम्' इति क ख पाठ ।

एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तं वाक्यमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि सयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहावस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति सयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थान बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थान प्रवृद्धज्वलनज्वालाप्रवत्तवारिणीति । वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहावस्थानलक्षणस्यापि कस्यचित् प्राणिविषयत्वेन दर्शनात् ॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा विगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः ॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थानं वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः । उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एव सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः । नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को विरोधः ? ॥ अथैव मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफल च धर्मफलेन प्रतिबद्धमेष विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्व्यधिका पापमपुण्यमधर्म इति सञ्ज्ञाता, चत्वारिंशत् द्व्यधिका तु पुण्य धर्म इति, तत्र कासाञ्चित् प्रकृतीना पुण्याख्याना- पापप्रकृतीना च-युगपद् विपाकाभ्युपगमे- कुतः प्रतिबन्ध्यप्रतिबन्धकभाव लक्षणो विरोधः ? । अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपाकाभाव., तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः, नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वय विरोध. प्रस्तुते वस्तुनि, न कश्चिद् दोष', इष्यत एव

(Margin: एकत्रानवस्थानादिविरोधखण्डनम्)

१ योऽहिनीवन' इति क पाठ ।

२ बन्धे विंशत्युत्तरशतभावेऽपि प्रशस्वेतरवर्णचतुष्कग्रहात् अधिकाश्चतस्रोऽत्र।

३ नरायुषो विगम सुरायुष प्रतिपत्ति. ।

द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, कदाचिद् द्रव्यं विवक्ष्यते, न पर्यायः, कदाचित् पर्यायो विवक्ष्यते, न द्रव्यम्, उभयं तु सम्भवति, त्वयाऽप्येककालयोरेव प्रतिबन्ध्यप्रतिबन्धकभावोऽभ्युपेयते, अन्यथा स एव न स्यात् प्रतिबन्धः, अतो न कश्चिद् विरोधः। सदसतोर्नित्यानित्ययोर्वा भिक्षुवरधर्मकीर्तिनापि विरोध उक्तः प्रमाणविनिश्चयादौ स पुनरयं विरोधः कथं गम्यते, कचिदविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिर्भवति, यथा शीतोष्णस्पर्शयोरसहावस्थानम्, अन्योन्यपरिहारस्थितिलक्षणतया वा विरोधो नित्यानित्यवत् अन्योन्यं परस्परं व्यवच्छेदः-परिहारस्तेनान्योन्यपरिहारेण स्थिति-

धर्मकीर्तिमतखण्डनम् लक्षणोऽन्योन्यव्यवच्छेदरूपः, परस्परपरिहारस्थितिलक्षणतया च विरोधिनोर्नित्यनित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयकः एकत्यागोऽप्यपरपरिग्रहाविनाभावी, तथा भावाभावयोरेकत्राभावः, एष च प्रतियोगिव्यवच्छेदरूपः सामयिकोऽसहावस्थानभेद एव, पूर्वकस्तु शीतोष्णस्पर्शयोश्छायातपयोः प्रकाशतमसोश्च दृश्यात्मनोः परिनिष्पन्नयोरेकत्राभावादनुपलब्धिलक्षण इत्येतावान् विशेष इति। अत्रोच्यते-तार्किकापशब्देन न किञ्चिदत्रातिरिक्तमपदिष्टम्॥ यदप्यपादेशि तदप्यसमीचीनम्, यतोऽसहावस्थानलक्षण एव विरोधो द्विधा कल्प्यते, नामैव च लक्षणं, न सहावस्थानं लक्षणं यस्य विरोधस्येत्यनेनैव शीतोष्णस्पर्शयोरिव नित्यानित्यविरोधस्यापि सङ्गृहीतत्वाद् भेदेनाभिधाने प्रयोजनाभावाद् दुर्विदग्धतामात्रमेवावशिष्यते भिक्षुवरस्य। स्यादियमारेका, दृश्यपरिनिष्पन्नयोः प्राच्यः, इतरः परिकल्पितरूपयोः स्वसामान्यलक्षणविषयत्वेन भेदप्रकाशनमिति, एतदप्यसङ्गतम्, स्वलक्षणभेदानामानन्त्यात् परिकल्पनहुत्वाच्च कुतो द्वैविध्यम्। अपिच नित्यता भवतु परिकल्पः, अनित्यता पुनः संस्कृतलक्षणम्, "उत्पत्तिः स्थितिर्जराऽनित्यते"ति वचनात्। दिग्नागेनाप्युक्तम्, "नित्यसमाया जातौ स एव तु भावोऽभूत्वा भवन् भूत्वा वाऽभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यते"ति, एवं च न नित्यानित्ययोः सामान्यलक्षणयोर्विरोधः, नापि स्वलक्षणासामान्यलक्षणयोः, स्वलक्षणोपादानत्वात् सामान्यलक्षणस्य, परिकल्पितयोश्च खरतुरगविषाणयोर्विरोध इत्यद्भुतमपश्यद् भिक्षुवरः, तस्मात् स्वलक्षणविषय एव विरोधोऽस्तु, तत्रापि न स्वलक्षणमित्येव विरोधः, किन्तु द्रव्याणां द्विविधाः पर्यायाः-क्रमभुवः सहभुवश्च, युगपदवस्थायिनोऽयुगपदवस्थायिनश्च, सूक्ष्माः स्थूलाश्च, साध्याः साधनानि च, व्यापृताश्चाव्यापृताश्च, यथा घटे सद्द्रव्यमूर्तोचेतनरूपरसगन्धस्पर्शसङ्ख्यास-

---

१ लक्षणाऽन्योन्यव्यवच्छेदरूपा इति क-ख-पाठः। २ स्पर्शयोर्नित्यानित्य' इति क ख पाठः।

३ नित्यमित्युक्तेऽनित्यतापरिहारस्यावश्यम्भावात् शीतोष्णसमानता तत्त्वतस्तु अवयवभेदेन कालादिभेदेन वा न क्वापि विरोधः।

४ 'वा' इति क पाठः।

एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तं शक्यमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि सयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहावस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति सयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थानं बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थान प्रवृद्धज्वलनज्वालाप्रतप्तवारिणीति । वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहावस्थानलक्षणस्यापि कस्यचित् प्राणिविषयत्वेन दर्शनात् ॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा विगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः ॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थान वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः । उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एव सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः । नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को विरोधः ? ॥ अथैव मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफल च धर्मफलेन प्रतिबद्धमेष विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्ह्यधिका पापमपुण्यमधर्म इति सञ्ज्ञाता, चत्वारिंशत् द्व्यधिका तु पुण्य धर्म इति, तत्र कासाञ्चित् प्रकृतीनां पुण्याख्याना पापप्रकृतीना च युगपद् विपाकाभ्युपगमे कुतः प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः ? । अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपाकाभावः, तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः, नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वय विरोधः प्रस्तुते वस्तुनि, न कश्चिद् दोषः, इष्यत एव

एकत्रानवस्थानादिविरोधखण्डनम्

१ योऽहिजीवन' इति क पाठ ।

२ बन्धे विंशत्युत्तरशतभावेऽपि प्रशस्तेतरवर्णचतुष्कग्रहात् अधिकाश्चत्वारोऽत्र।

३ नरायुषो विगम सुरायुष प्रतिपत्ति ।

द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, कदाचिद् द्रव्यं विवक्ष्यते, न पर्यायः, कदाचित् पर्यायो विवक्ष्यते, न द्रव्यम्, उभय तु सम्भवति, त्वयाऽप्येककालयोरेव प्रतिबन्ध्यप्रतिबन्धकभावोऽभ्युपेयते, अन्यथा स एव न स्यात् प्रतिबन्धः, अतो न कश्चिद् विरोधः। सदसतोर्नित्यानित्ययोर्वा भिक्षुवरधर्मकीर्तिनापि विरोध उक्तः प्रमाणविनिश्चयादौ स पुनरयं विरोधः कथ गम्यते, कचिदविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिर्भवति, यथा शीतोष्णस्पर्शयोरसहावस्थानम्, अन्योन्यपरिहारस्थितिलक्षणतया वा विरोधो नित्यानित्यवत् अन्योन्य परस्पर व्यवच्छेदः–परिहारस्तेनान्योन्यपरिहारेण स्थिति-

धर्मकीर्तिमतखण्डनम्

लक्षणोऽन्योन्यव्यवच्छेदरूपः, परस्परपरिहारस्थितिलक्षणतया च विरोधिनोर्नित्यनित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयकः एकत्यागोऽप्यपरपरिग्रहाविनाभावी, तथा भावाभावयोरेकत्राभावः, एष च प्रतियोगिव्यवच्छेदरूपः सामयिकोऽसहावस्थानभेद एव, पूर्वकस्तु शीतोष्णस्पर्शयोश्छायातपयोः प्रकाशतमसोश्च दृश्यात्मनोः परिनिष्पन्नयोरेकत्राभावादनुपलब्धिलक्षण इत्येतावान् विशेष इति। अत्रोच्यते–तार्किकापशब्देन न किञ्चिदत्रातिरिक्तमपदिष्टम्॥ यदप्यपादेशि तदप्यसमीचीनम्, यतोऽसहावस्थानलक्षण एव विरोधो द्विधा कल्प्यते, नामैव च लक्षण, न सहावस्थान लक्षण यस्य विरोधस्येत्यनेनैव शीतोष्णस्पर्शयोरिव नित्यानित्यविरोधस्यापि सङ्गृहीतत्वाद् भेदेनाभिधाने प्रयोजनाभावाद् दुर्विदग्धतामात्रमेवावशिष्यते भिक्षुवरस्य। स्यादियमारेका, दृश्यपरिनिष्पन्नयोः प्राच्यः, इतरः परिकल्पितरूपयोः स्वसामान्यलक्षणविषयत्वेन भेदप्रकाशनमिति, एतदप्यसङ्गतम्, स्वलक्षणभेदानामानन्त्यात् परिकल्पनहुत्वाच्च कुतो द्वैविध्यम्। अपिच नित्यता भवतु परिकल्पः, अनित्यता पुनः सस्कृतलक्षणम्, "उत्पत्तिः स्थितिर्जराऽनित्यते"ति वचनात्। दिग्नागेनाप्युक्तम्, "नित्यसमाया जातौ स एव तु भावोऽभूत्वा भवन् भूत्वा वाऽभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यते"ति, एव च न नित्यानित्ययोः सामान्यलक्षणयोर्विरोधः, नापि स्वलक्षणासामान्यलक्षणयोः, स्वलक्षणोपादानत्वात् सामान्यलक्षणस्य, परिकल्पितयोश्च खरतुरगविषाणयोर्विरोध इत्यद्भुतमपश्यद् भिक्षुवरः, तस्मात् स्वलक्षणविषय एव विरोधोऽस्तु, तत्रापि न स्वलक्षणमित्येव विरोध., किन्तु द्रव्याणा द्विविधाः पर्यायाः–क्रमभुव' सहभुवश्च, युगपदवस्थायिनोऽयुगपदवस्थायिनश्च, सूक्ष्माः स्थूलाश्च, साध्याः साधनानि चँ, व्यापृताश्चाव्यापृताश्च, यथा घटे सद्रव्यमूर्ताचेतनरूपरसगन्धस्पर्शसङ्ख्यास-

---

१ लक्षणाऽन्योन्यव्यवच्छेदरूपा' इति क ख-पाठ। २ स्पर्शयोर्नित्यानित्य' इति क ख पाठ।

३ नित्यमित्युक्तेऽनित्यतापरिहारस्यावश्यकत्वात् शीतोष्णसमानता तत्त्वतस्तु अवयवभेदेन कालादिभेदेन वा न क्वापि विरोध।

४ 'वा' इति क पाठ।

एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तं शक्यमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि संयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहावस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति संयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थानं बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थानं प्रवृद्धज्वलनज्वालाप्रतानवारिणीति । वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहानवस्थानलक्षणस्यापि कस्यचित् प्राणिविषयत्वेन दर्शनात् ॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा निगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः ॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थानं वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः । उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एवं सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः । नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को विरोधः ? ॥ अथैवं मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफलं च धर्मफलेन प्रतिबद्धमेष विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्द्व्यधिका पापमपुण्यमधर्म इति सञ्ज्ञाता, चत्वारिंशत् द्व्यधिका तु पुण्यं धर्म इति, तत्र कासाञ्चित् प्रकृतीनां पुण्याख्यानां पापप्रकृतीनां च युगपद् विपाकाभ्युपगमे कुतः प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः ? । अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपाकाभावः, तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः, नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वयं विरोधः प्रस्तुते वस्तुनि, न कश्चिद् दोषः, इष्यत एव

(एकत्रानवस्थानादिविरोधखण्डनम्)

१ योऽहिजीवन' इति क पाठः ।
२ ब धे विंशत्युत्तरशतभावेऽपि प्रशस्तेतरवर्णचतुष्कमहात् अधिकाश्चतस्रोऽत्र ।
३ नरायुषो विगमः सुरायुषः प्रतिपत्तिः ।

द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, कदाचिद् द्रव्य विवस्यते, न पर्यायः, कदाचित् पर्यायो विवस्यते, न द्रव्यम्, उभय तु सम्भवति, त्वयाऽप्येककालयोरेव प्रतिबन्ध्यप्रतिबन्धकभावोऽभ्युपेयते, अन्यथा स एव न स्यात् प्रतिबन्धः, अतो न कश्चिद् विरोधः। सदसतोर्नित्यानित्ययोर्वा भिक्षुवरधर्मकीर्तिनापि विरोध उक्तः प्रमाणविनिश्चयादौ स पुनरयं विरोधः कथ गम्यते, कचिदविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिर्भवति, यथा शीतोष्णस्पर्शयोरसहावस्थानम्, अन्योन्यपरिहारस्थितिलक्षणतया वा विरोधो नित्यानित्यवत् अन्योन्य परस्पर व्यवच्छेदः–परिहारस्तेनान्योन्यपरिहारेण स्थिति-

धर्मकीर्तिमतखण्डनम्

लक्षणोऽन्योन्यव्यवच्छेदरूपः, परस्परपरिहारस्थितिलक्षणतया च विरोधिनोनित्यनित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयकः एकत्यागोऽप्यपरपरिग्रहाविनाभावी, तथा भावाभावयोरेकत्राभावः, एप च प्रतियोगिव्यवच्छेदरूपः सामयिकोऽसहावस्थानभेद एव, पूर्वकस्तु शीतोष्णस्पर्शयोश्छायातपयोः प्रकाशतमसोश्च दृश्यात्मनोः परिनिष्पन्नयोरेकत्राभावादनुपलब्धिलक्षण इत्येतावान् विशेष इति। अत्रोच्यते–तार्किकापशब्देन न किञ्चिदत्रातिरिक्तमपदिष्टम्॥ यदप्यपादेशि तदप्यसमीचीनम्, यतोऽसहावस्थानलक्षण एव विरोधो द्विधा कल्प्यते, नामैव च लक्षण, न सहावस्थानं लक्षण यस्य विरोधस्येत्यनेनैव शीतोष्णस्पर्शयोरिव नित्यानित्यविरोधस्यापि सङ्गृहीतत्वाद् भेदेनाभिधाने प्रयोजनाभावाद् दुर्विदग्धतामात्रमेवावशिष्यते भिक्षुवरस्य। स्यादियमारेका, दृश्यपरिनिष्पन्नयोः प्राच्यः, इतरः परिकल्पितरूपयोः स्वसामान्यलक्षणविषयत्वेन भेदप्रकाशनमिति, एतदप्यसङ्गतम्, स्वलक्षणभेदानामानन्त्यात् परिकल्पनहुत्वाच्च कुतो द्वैविध्यम्। अपिच नित्यता भवतु परिकल्पः, अनित्यता पुनः सस्कृतलक्षणम्, "उत्पत्तिः स्थितिर्जराऽनित्यते"ति वचनात्। दिग्नागेनाप्युक्तम्, "नित्यसमाया जातौ स एव तु भावोऽभूत्वा भवन् भूत्वा वाऽभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यते"ति, एव च न नित्यानित्ययोः सामान्यलक्षणयोर्विरोधः, नापि स्वलक्षणासामान्यलक्षणयोः, स्वलक्षणोपादानत्वात् सामान्यलक्षणस्य, परिकल्पितयोश्च खरतुरगविषाणयोर्विरोध इत्यद्भुतमपश्यद् भिक्षुवरः, तस्मात् स्वलक्षणविषय एव विरोधोऽस्तु, तत्रापि न स्वलक्षणमित्येव विरोधः, किन्तु द्रव्याणा द्विविधाः पर्यायाः– क्रमभुवः सहभुवश्च, युगपदवस्थायिनोऽयुगपदवस्थायिनश्च, सूक्ष्माः स्थूलाश्च, साध्याः साधनानि च, व्यापृताश्चाव्यापृताश्च, यथा घटे सद्द्रव्यमूर्तचेतनरूपरसगन्धस्पर्शसङ्ख्यास-

---

१ लक्षणाऽन्योन्यव्यवच्छेदरूपा इति क ख-पाठ। २ स्पर्शयोर्नित्यानित्य' इति क ख पाठ।

३ नित्यमित्युक्तेऽनित्यतापरिहारस्यावश्यकत्वात् शीतोष्णसमानता तत्त्वतस्तु अवयवभेदेन कालादिभेदेन वा न क्वापि विरोध।

४ 'वा' इति क पाठ।

एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तं शक्यमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि सयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहानवस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति सयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थानं बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थान प्रवृद्धज्वलनज्वालाप्रतप्तवारिणीति । वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहानवस्थानलक्षणस्यापि कस्यचित् प्राणिविषयत्वेन दर्शनात् ॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा विगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः ॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थानं वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः । उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एवं सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः । नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को

एकत्रानवस्थानादिविरोधखण्डनम्

विरोधः ? ॥ अथैवं मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफलं च धर्मफलेन प्रतिबद्धमेष विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्द्व्यधिका पापमपुण्यमधर्म इति सञ्ज्ञाता, चत्वारिंशत् द्व्यधिका तु पुण्य धर्म इति, तत्र कासाञ्चित् प्रकृतीनां पुण्याख्याना- पापप्रकृतीना-च--युगपद् विपाकाभ्युपगमे—कुतः प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः ? । अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपाकाभावः, तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः, नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वयं विरोधः प्रस्तुते वस्तुनि, न कश्चिद् दोषः, इष्यत एव

१ योऽहिजीवनं इति क पाठ ।

२ बन्धे विंशत्युत्तरशतभावेऽपि प्रशस्तेतरवर्णचतुष्कग्रहात् अधिकाश्चत्वारोऽत्र।

३ नरायुषो विगम सुरायुष प्रतिपत्ति ।

द्रव्यपर्याययोरन्यतरस्य गुणप्रधानभावः, कदाचिद् द्रव्यं विनश्यते, न पर्यायः, कदाचित् पर्यायो विनश्यते, न द्रव्यम्, उभय तु सम्भवति, त्वयाऽप्येककालयोरेव प्रतिबन्ध्यप्रतिबन्धकभावोऽभ्युपेयते, अन्यथा स एव न स्यात् प्रतिबन्ध', अतो न कश्चिद् विरोधः। सदसतोर्नित्यानित्ययोर्वा भिक्षुवरधर्मकीर्तिनापि विरोध उक्तः प्रमाणविनिश्चयादौ स पुनरय विरोधः कथ गम्यते, कचिदविकलकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिर्भवति, यथा शीतोष्णस्पर्शयोरसहावस्थानम्, अन्योन्यपरिहारस्थितिलक्षणतया वा विरोधो नित्यानित्यवत् अन्योन्य परस्पर व्यवच्छेदः-परिहारस्तेनान्योन्यपरिहारेण स्थिति-

धर्मकीर्तिमतखण्डनम्

लक्षणोऽन्योन्यव्यवच्छेदरूपः, परस्परपरिहारस्थितिलक्षणतया च विरोधिनोर्नित्यनित्ययोरेकपरिग्रहोऽपरत्यागनान्तरीयकः एकत्यागोऽप्यपरपरिग्रहाविनाभावी, तथा भावाभावयोरेकत्राभावः, एष च प्रतियोगिव्यवच्छेदरूपः सामयिकोऽसहावस्थानभेद एव, पूर्वकस्तु शीतोष्णस्पर्शयोश्छायातपयोः प्रकाशतमसोश्च दृश्यात्मनोः परिनिष्पन्नयोरेकत्राभावादनुपलब्धिलक्षण इत्येतावान् विशेष इति। अत्रोच्यते-तार्किकापशब्देन न किञ्चिदत्रातिरिक्तमपदिष्टम्॥ यदप्यपादेशि तदप्यसमीचीनम्, यतोऽसहावस्थानलक्षण एव विरोधो द्विधा कल्प्यते, नामैव च लक्षण, न सहावस्थान लक्षणं यस्य विरोधस्येत्यनेनैव शीतोष्णस्पर्शयोरिव नित्यानित्यविरोधस्यापि सङ्गृहीतत्वाद् भेदेनाभिधाने प्रयोजनाभावाद् दुर्विदग्धतामात्रमेवावशिष्यते भिक्षुवरस्य। स्यादियमारेका, दृश्यपरिनिष्पन्नयोः प्राच्यः, इतरः परिकल्पितरूपयोः स्वसामान्यलक्षणविषयत्वेन भेदप्रकाशनमिति, एतदप्यसङ्गतम्, स्वलक्षणभेदानामानन्त्यात् परिकल्पबहुत्वाच्च कुतो द्वैविध्यम्। अपिच नित्यता भवतु परिकल्पः, अनित्यता पुनः संस्कृतलक्षणम्, "उत्पत्तिः स्थितिर्जराऽनित्यते"ति वचनात्। दिग्नागेनाप्युक्तम्, "नित्यसमाया जातौ स एव तु भावोऽभूत्वा भवन् भूत्वा वाऽभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यते"ति, एव च न नित्यानित्ययोः सामान्यलक्षणयोर्विरोधः, नापि स्वलक्षणासामान्यलक्षणयोः, स्वलक्षणोपादानत्वात् सामान्यलक्षणस्य, परिकल्पितयोश्च खरतुरगविषाणयोर्विरोध इत्यद्भुतमपश्यद् भिक्षुवरः, तस्मात् स्वलक्षणविषय एव विरोधोऽस्तु, तत्रापि न स्वलक्षणमित्येव विरोधः, किन्तु द्रव्याणा द्विविधाः पर्यायाः-क्रमभुव' सहभुवश्च, युगपदवस्थायिनोऽयुगपदवस्थायिनश्च, सूक्ष्माः स्थूलाश्च, साध्याः साधनानि च, व्यापृताश्चाव्यापृताश्च, यथा घटे सद्द्रव्यमूर्ताचेतनरूपरसगन्धस्पर्शसङ्ख्यास-

---

१ लक्षणाऽन्योन्यव्यवच्छेदरूपा इति क-ख-पाठ। २ स्पर्शयोर्नित्यानित्य ' इति क ख पाठ।

३ नित्यमित्युक्तेऽनित्यतापरिहारस्यावश्यकत्वात् शीतोष्णसमानता तत्त्वतस्तु अवयवभेदेन कालादिभेदेन वा न क्वापि विरोध।

४ 'वा' इति क पाठ।

एव । अथोष्णस्य प्रतियोगी शीत एवानुष्ण इति गृह्यते, रिक्तं शक्यमेतदपि, अनुष्णाशीतस्याप्युष्णग्रहणे प्रतिक्षिप्यमाणत्वात्, तस्मादुष्णपर्यायोऽनुष्णपर्यायेण प्रतिपक्षेण सहैकत्रैकदा च दृष्ट इति । न च वध्यघातकासहावस्थानविरोधयोर्विशेषः कश्चिदस्ति, अहिनकुलयोर्हि संयोगे योऽहेर्जीवनपर्यायः स मरणपर्यायेण सह नावतिष्ठते इत्यसहावस्थानलक्षण एव विरोधः, तथाऽग्निजलयोः सति संयोगे कदाचिदुष्णपर्यायस्य शीतपर्यायेण सहानवस्थानं बहुजलमध्यप्रक्षिप्तस्यैकस्याङ्गारशकलस्य, कदाचिच्छीतस्यानवस्थानं प्रवृद्धज्वलनज्वालाप्रतानवारिणीति । वध्यघातकलक्षणः प्राणिविषय इति चेत्, न, असहावस्थानलक्षणस्यापि कस्यचित् प्राणिविषयत्वेन दर्शनात् ॥ अथैककालविषययोर्वध्यघातकविरोध इति चेत्, न, असहावस्थानलक्षणेऽपि विरोधे यदा श्यामताऽपैति पीतता चोत्पद्यते तदा विगमप्रतिपत्त्योरेकः कालोऽतः शब्दार्थोऽपि न सङ्गच्छते सहानवस्थानमिति, तस्मान्नास्ति विरोधः ॥

अथ द्वितीयपक्षमाश्रयते—कालान्तरावस्थायित्वे सति दृष्टयोरेकत्रान्यतरस्यानवस्थानमुभयानवस्थानं वा विरोध इति, सोऽप्यसङ्गतः, कालान्तरावस्थायितायामेकत्र तावन्न विरोधः । उत्तरकालमनवस्थानोपलब्धेर्विरोध इति चेत्, एवं सति न कस्यचित् स्त्रीमनुष्यबलीवर्दादेर्विरोधः स्यात्, तस्मादुपेक्ष्यः । नापि प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः सदसतोर्नित्यानित्ययोर्वा, अभिन्नकालमेकत्रात्मद्रव्ये किल धर्माधर्मावुभावपि स्तः, तयोश्चैकस्य प्रधानभावोऽन्यस्य गुणभावः, प्रधानगुणभावे चैकत्र द्वयमप्यस्तीति को विरोधः ? ॥ अथैवं मन्येथाः—धर्मस्य फलमधर्मफलेन प्रतिबद्धमधर्मफलं च धर्मफलेन प्रतिबद्धमेष विरोध इति, यदैकस्य प्रधानभावस्तदैव न तस्य गुणभावः, प्रधानता चोद्भूतविपाकावस्थया गुणभावोऽप्यनुद्भूतविपाकावस्थयेति, एतदप्ययुक्तम्, यस्मादेकत्रात्मन्येकदा धर्माधर्मफलोपभोगोऽभ्युपगम्यत एव जैनेन्द्रैः, धर्माधर्मौ पुण्यापुण्यलक्षणौ, पुण्यापुण्ये च पुद्गलात्मके, पुद्गलाश्च ज्ञानावरणादिभेदेन परिणताः, कर्म चतुर्विंशत्युत्तरप्रकृतिशतभेदम्, तत्र कर्मप्रकृतीनामशीतिर्व्यधिका पापमपुण्यमधर्म इति सञ्ज्ञाता, चत्वारिंशत् व्यधिका तु पुण्यं धर्म इति, तत्र कासाञ्चित् प्रकृतीनां पुण्याख्यानां–पापप्रकृतीनां च–युगपद् विपाकाभ्युपगमे– कुतः प्रतिबन्ध्यप्रतिबन्धकभावलक्षणो विरोधः ? । अथापि स्यात् कासाञ्चित् प्रकृतीनां प्रतिबन्ध्यप्रतिबन्धकभावो यथा नरायुषः सुरायुषश्चैकदैकत्र विपाकाभावः, तत्रापि न कर्मणः सहावस्थानमनिष्टम्, किं तर्हि ? विपाकपर्याययोरसहावस्थितिः, नरायुर्विपाकपर्यायः सुरायुषो विपाकेन सह नावतिष्ठत इत्यसहावस्थानलक्षण एव, विगमप्रतिपत्त्योश्चैककालत्वाज्जातुचित् सहावस्थानमपीति । उपेत्य वा ब्रूमः—अस्त्वयं विरोधः प्रस्तुते वस्तुनि, न कश्चिद् दोषः, इष्यत एव

एकत्रानवस्थानादिविरोधखण्डनम्

१ योऽहिजीवन' इति क पाठः ।

२ बन्धे विंशत्युत्तरशतभावेऽपि प्रशस्तेतरवर्णचतुष्कग्रहात् अधिकाश्चतस्रोऽत्र ।

३ नरायुषो विगमः सुरायुषः प्रतिपत्तिः ।

नपुंसकलिङ्गनिर्देशः, आदिमदनादियुगपदयुगपद्भाविनिकालविषयपर्यायार्पणभजनानेकान्तप्ररूपणो हि परिणामार्थः, तैः पर्यायैः प्रतिषेधसमग्रादेशविकलादेशैः, स्वपरार्थशब्दपर्यायभजनया च स्व स्व तत्त्व पुष्णातीति विस्तरेण चरितार्थमेतत्, तत्र स्थितिलक्षणोऽन्तरङ्गस्तत्परिणामरूपत्वात् तत्सहानस्थायित्वात्, बहिरङ्गावुत्पादव्ययौ विस्रमाप्रयोगेण च कादाचित्कौ द्रव्यादिभेदात् प्रतिपन्नानन्तभेदौ, एव चार्थोऽर्पितानर्पितधर्मात्मकस्तद्विषयः शब्दो व्यवहाराङ्गमतः शब्दव्यवहार एव प्राधान्येनाङ्गीक्रियते, अत्र प्रत्यर्थं च प्रतिपत्तिः शब्दात् साक्षाद् गम्यमानार्थतया च सर्वत्र, यतः सदेकनानानित्यानित्यादिधर्मकलापपरिकरमशेषमस्तिकायजालम्, तत्रान्यतमैकधर्मार्पणे शेषधर्माणा गम्यमानता, यतो न सद् असत्त्वादिभेदविविक्तम्, असद् वा सदादिविकल्पशून्यम्, अन्योन्यापेक्षसत्ताकत्वात् सदादीनाम्, एव वस्तुनिश्चयः, अर्पितमुपनीत वस्तु विवक्षितेन धर्मेण साक्षाद् वाचकेन शब्देनाभिहित व्यवहारः प्रयोजनमस्येति व्यावहारिकम्, अर्पित च तद् व्यावहारिक चेत्यर्पितव्यावहारिकम्। एतदुक्त भवति-किञ्चिद् वस्तु विशिष्टाभिधानार्पित सद् व्यवहार साधयत्यपरमनर्पितमेव साक्षाद् वाचकेन शब्देन प्रतीयमान सद्व्यवहाराय व्याप्रियत इत्यत आह—अनर्पितव्यावहारिकं चेत्यर्थः। अथवाऽर्पितविषयो व्यवहारोऽर्पित व्यवहारः शब्दपरिप्रापितव्यवहार इत्यर्थः। सोऽस्य सतोऽस्ति नित्यस्य चेत्यर्पितव्यावहारिक सन्नित्यं च, एवमनर्पितव्यावहारिकमपि द्रष्टव्यमसदनित्यं च यदा चासदनित्ये शब्देन साक्षात् प्रतिपिपादयिषिते तदाऽर्पिते ते, इतरे तु सन्नित्ये गम्यमाने तत्रानर्पिते भवत[1], तस्मादेकत्र वस्तुन्यर्पितधर्मपरिग्रहोऽनर्पितधर्मसत्तानान्तरीयकः, यथा कृतकत्वधर्माभ्युपगमोऽनित्यत्वसत्तानान्तरीयक', एकत्यागश्चापरपरित्यागाविनाभावी, यथा अनित्यत्वपरित्यागे कृतकत्वपरित्यागोऽवश्यभावीति, चशब्दः समुच्चिनोति सर्वान् विकल्पान्, इतिशब्दो हेतौ, यस्मादर्पितधर्मविषयः शब्दव्यवहारस्तस्मादर्पितानर्पितसिद्धे' सन्नित्ये असदनित्ये च विवक्षावशात्, अवधारणे वा, एतावानेव शब्दव्यवहारो यदुतार्पितानर्पितधर्मविषयो नान्य इति, अर्थ इत्यभिधेयप्रतिपत्तिमाचष्टे, समासत एषोऽर्थः सूत्रस्येतियावत्। धर्मार्थकाममोक्षलक्षणः सकलः पुरुषार्थस्तद्योग्यव्यवहारार्पणाभ्या यथावदधिगम्यत इति ॥

**भा०—तत्र सच्चतुर्विधम्, तद्यथा—द्रव्यास्तिकं, मातृकापदास्तिकं, उत्पन्नास्तिकं, पर्यायास्तिकमिति।**

टी०—तत्र सच्चतुर्विधमित्यादि। तत्र-तेषु सन्नित्यासदनित्येषु सतो भेदानाचष्टे, सच्चतुर्विधमेव, न त्रिधा न च पञ्चधा, तदुद्देशार्थमाह—द्रव्यास्तिकमित्यादि। उत्पादादिमूलभेदान्त.पात्येव, सविपर्ययद्रव्यादिभेदप्रपञ्चस्त्रैरूप्येऽप्येकस्य धर्मिण' परिणामसमूहस्वभावस्योत्तरोत्तरभेदप्रदर्शनार्थः, एवविधोपन्यासे च सर्वतत्पर्यायाकाङ्क्षा, तावत्परिणा-

---

[1] 'विक्तम्' इति क पाठ।

द्रव्याणां पर्यायाणां द्वैविध्यम्

स्थानादयः सहभुवो युगपदवस्थायिनः, स्थूलाः सूक्ष्माश्च साधनानि साध्यानि च कार्यवशाद् व्यापृता-उदकाद्याहरणादिषु मृत्पिण्ड–शिवक-स्थासक कोशक-कुशूल घट-कपाल-शकल-शर्करा पांशुत्रुटिपरमाणवः क्रम भुवः, नहि मृदादिसामान्यव्यतिरेकेण पिण्डादिधर्मा भवितुमुत्सहन्ते, न ह्यङ्गुलिभेदेनर्जुकुटिलतयोः सम्भवः, सैव हि साङ्गुलिः स्वाँस्तु धर्मान् पारम्पर्यमात्रप्रतिलब्धवृत्ती क्रमेणोन्नमयति, मयूराण्डकरसवदुपारूढस्वरूपाख्येति वचनात् । एत एवासहावस्थायिनः सूक्ष्माः स्थूलाश्चापेक्षया नित्यानित्यादयः साध्याः साधनानि चाव्यापृता उदकाद्याहरणादिषु, तेषा को नामाय विरोधः ? ॥ ननु सहानवस्थानम्, तन्न, सहोत्पादावस्थानदर्शनादेकद्रव्यवृत्तित्वाच्च, द्रव्यमेव चक्षुरादिग्रहणापदेशविशेषाद् रूपादिव्यपदेश्यमेकपुरुषपितृपुत्रत्वादिवत्, न च रूपादीना समुदायैकरूपताऽभ्युपगमनीया, रूपग्रहणे रसादिग्रहणप्रसङ्गादिन्द्रियान्तरवैयर्थ्यसङ्करादिदोषप्रसङ्गाच्च । न चाभावता, प्रमाणाभावात् प्रसिद्धिविरोधाच्च । स्वलक्षणविरोधोऽपि नास्त्येव, सामान्यविशेषात्मैकलक्षणत्वात् स्याद्वादिपरिगृहीतस्य वस्तुनः, जात्यन्तरत्वाच्च नरसिंहवदेकान्तवादिपरिकल्पिताद् वस्तुन इति । स्यात् तु क्रमजन्मनां धर्माणामसहावस्थायिनां देवमनुष्यादीना मृत्पिण्डशिवकादीना च विरोधोऽसहावस्थानलक्षणः, सोऽपि द्रव्यास्तिकनयप्राधान्यादभेदे विवक्षिते पर्यायाणां द्रव्यव्यतिरेकेणानभ्युपगमान्नास्तीति न कश्चिद् विरोधोऽस्ति स्याद्वादिनः, तमःप्रकाशच्छायातपशीतोष्णविरोधोदाहरणनिरास उक्तविधिनाऽवगम्यः, द्रव्यार्थतो नित्याः पुद्गलाः तमस्तया च क्रमजन्मानः परिणमन्ते पर्यायाः, सामान्यस्याभिन्नत्वादेकरूपा एवेति कः केन विरुध्यते ? । इत्थमर्थस्य सामान्यविशेषात्मैकरूपत्वेऽन्योन्यापेक्षित्वेऽनेकान्तात्मकत्वे एकान्तवादिपरिकल्पिताज्जात्यन्तरत्वे च न कश्चिद् दोषः, तथा स्थित्यंशस्य नित्यत्वादुत्पादव्ययानित्यत्वादुभयस्याभिन्नस्वभाववस्तुताया कथमिद घटते नित्यानित्ययोरेकपरिग्रहोऽपरत्यागमनान्तरीयकः एकत्यागश्चापरपरिग्रहाविनाभावीति, प्रत्यक्षादिप्रमाणबाधितत्वादुन्मत्तकप्रलापमात्रमेतदवसीयत इति, तस्मान्न परिकल्पितविषयो विरोधो ( न परिकल्पितापरिकल्पितविषयो ) न सकलस्वलक्षणविषयो नापि सामयिकः, किं तर्हि ? पर्यायनयाभिप्रायेण क्रमजन्मपर्यायविषयः, स चैक एवासहावस्थानलक्षणः, सोऽपि द्रव्यार्थनयाभिप्रायेण नैवास्तीति भावितम् । एव चैकवस्तुविषये सदसती नित्यानित्ये च अर्पितानर्पितसिद्धेरिति व्यवस्थितम् ॥ द्वितीयसम्बन्धाभिधानेऽपि सङ्गतार्थमेव भाष्यमुक्तेन विधिना, एतमेवार्थमधुना भाष्येण प्रपञ्चयति—

भा०—अर्पितव्यावहारिकमनर्पितव्यावहारिकं चेत्यर्थः ॥

टी०—अर्पितव्यावहारिकमित्यादिना, प्रक्रान्त त्रिविध सन्नित्य च, तदपेक्षया

१ चिह्नितो भाग क-ख-योर्नास्ति

नपुंसकलिङ्गनिर्देशः, आदिमदनादियुगपदयुगपद्भाविन्त्रिकालविषयपर्यायार्पणभजनानेकान्तप्ररूपणो हि परिणामार्थः, तैः पर्यायैः प्रतिषेधसमग्रादेशविकलादेशैः, स्वपरार्थशब्दपर्यायभजनया च स्व स्व तत्त्व पुष्णातीति विस्तरेण चरितार्थमेतत्, तत्र स्थितिलक्षणोऽन्तरङ्गस्तत्परिणामरूपत्वात् तत्सहावस्थायित्वात्, वहिरङ्गावुत्पादव्ययौ विस्रसाप्रयोगेण च कादाचित्कौ द्रव्यादिभेदात् प्रतिपन्नानन्तभेदौ, एव चार्योऽर्पितानर्पितधर्मात्मकस्तद्विषयः शब्दो व्यवहाराङ्गमतः शब्दव्यवहार एव प्राधान्येनाङ्गीक्रियते, अत्र प्रत्यर्थ च प्रतिपत्तिः शब्दात् साक्षाद् गम्यमानार्थतया च सर्वत्रैव, यत' सदेकनानानित्यानित्यादिधर्मकलापपरिकरमशेषमस्तिकायजालम्, तत्रान्यतमैकधर्मार्पणे शेषधर्माणा गम्यमानता, यतो न सद् असत्त्वादिभेदविविक्तम्, असद् वा सदादिविकल्पशून्यम्, अन्योन्यापेक्षसत्ताकत्वात् सदादीनाम्, एव वस्तुनिश्चयः, अर्पितमुपनीत वस्तु विवक्षितेन धर्मेण साक्षाद् वाचकेन शब्देनाभिहित व्यवहारः प्रयोजनमस्येति व्यावहारिकम्, अर्पित च तद् व्यावहारिक चेत्यर्पितव्यावहारिकम्। एतदुक्त भवति—किञ्चिद् वस्तु विशिष्टाभिधानार्पित सद् व्यवहार साधयत्यपरमनर्पितमेव साक्षाद् वाचकेन शब्देन प्रतीयमान सद्व्यवहाराय व्याप्रियत इत्यत आह—अनर्पितव्यावहारिकं चेत्यर्थः। अथवाऽर्पितविषयो व्यवहारोऽर्पित व्यवहारः शब्दपरिप्रापितव्यवहार इत्यर्थ'। सोऽस्य सतोऽस्ति नित्यस्य चेत्यर्पितव्यावहारिक सन्नित्य च, एवमनर्पितव्यावहारिकमपि द्रष्टव्यमसदनित्य च यदा चासदनित्ये शब्देन साक्षात् प्रतिपिपादयिषिते तदाऽर्पिते ते, इतरे तु सन्नित्ये गम्यमाने तत्रानर्पिते भवत', तस्मादेकत्र वस्तुन्यर्पितधर्मपरिग्रहोऽनर्पितधर्मसत्तानान्तरीयकः, यथा कृतकत्वधर्माभ्युपगमोऽनित्यत्वसत्तानान्तरीयकः, एकत्यागश्चापरपरित्यागाविनाभावी, यथा अनित्यत्वपरित्यागे कृतकत्वपरित्यागोऽवश्यभावीति, चशब्दः समुच्चिनोति सर्वान् विकल्पान्, इतिशब्दो हेतौ, यस्मादर्पितधर्मविषयः शब्दव्यवहारस्तस्मादर्पितानर्पितसिद्धेः सन्नित्ये असदनित्ये च विवक्षावशात्, अवधारणे वा, एतावानेव शब्दव्यवहारो यदुतार्पितानर्पितधर्मविषयो नान्य इति, अर्थ इत्यभिधेयप्रतिपत्तिमाचष्टे, समासत एषोऽर्थः सूत्रस्येतियावत्। धर्मार्थकाममोक्षलक्षणः सकलः पुरुषार्थस्तद्योग्य व्यवहारार्पणाभ्या यथावदधिगम्यत इति ॥

**भा०—तत्र सच्चतुर्विधम्, तद्यथा—द्रव्यास्तिकं, मातृकापदास्तिकं, उत्पन्नास्तिकं, पर्यायास्तिकमिति।**

टी०—तत्र सच्चतुर्विधमित्यादि। तत्र—तेषु सन्नित्यासदनित्येषु सतो भेदानाचष्टे, सच्चतुर्विधमेव, न त्रिधा न च पञ्चधा, तदुद्देशार्थमाह—द्रव्यास्तिकमित्यादि। उत्पादादिमूलभेदान्त'पात्येव, सविपर्ययद्रव्यादिभेदप्रपञ्चस्त्रैरूप्येऽप्येकस्य धर्मिणः परिणामसमूहस्वभावस्योत्तरोत्तरभेदप्रदर्शनार्थं', एवंविधोपन्यासे च सर्वतत्पर्यायाकाङ्क्षा, तावत्परिणा-

मानुयायित्वात् तत्संज्ञासम्बन्धादीनाम्, तत्रादिमद्भिः पर्यायैरर्प्यमाण सतो भावात् व्येति व्येष्यतीति चानित्यम्, अनाद्यैः पर्यायैरादिश्यमान सत्त्वद्रव्यत्वसञ्ज्ञित्वप्रमेयत्वचेतनत्वमूर्तामूर्तत्वभौतिकत्वेतरत्वग्राह्यत्वादिभिरविनाशधर्मकत्वान्नित्यम्, तद्धि सूक्ष्मोत्पादभङ्गसन्ततिसम्भवेऽपि सत्त्वादिभिराकारैर्नोत्पद्यते नापि विनश्यति। तत्र द्रव्यास्तिकं मातृकापदास्तिकं च द्रव्यनयः, उत्पन्नास्तिकं पर्यायास्तिक च पर्यायनयः। अस्ति मतिरस्येत्यास्तिकं, सतः प्रस्तुतत्वात् तदभिसम्बन्धे नपुंसकलिङ्गता, द्रव्ये आस्तिक द्रव्यास्तिकम्, मयूरव्यंसकादावकृतलक्षणतत्पुरुषप्रक्षेपात्। अथवाऽधिकरणशेषभावविवक्षाया द्रव्यस्यास्तिक द्रव्यास्तिकम्, अथवा आस्तिकमस्तिमति, किं तत्? नयरूप प्रतिपादयितृ, कस्य प्रतिपादकम्? द्रव्यस्य, अत• प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धविवक्षाया षष्ठीसमासश्च। एवं

द्रव्यास्तिक स्वरूपम् मातृकापदास्तिकादिष्वपि योज्यम्। द्रव्यमेवाभेद भिद्यते न पर्यायः, द्रव्य भवनलक्षणं मयूराण्डकरसवदुपारूढसर्वभेदबीज देशकालक्रमव्यङ्ग्यभेदसमरसावस्थमेकरूप भवन—भूतिः सत्त्वमाश्रितसत्तातिरिक्तं भेदप्रत्ययमर्शेनाभिन्नमपि भिन्नवदाभासते, तदेव चास्तीति मन्यते, तच्च द्रव्यास्तिकमसङ्कीर्णस्वभावं शुद्धप्रकृतिरूपमेक प्रत्याख्याताशेषविशेषकदम्बक द्रव्यात्मक द्रव्यमात्र सङ्ग्रहप्ररूपणाविषयमभिहितम्, अपर नैगमव्यवहारविषयमशुद्धप्रकृति, यस्माद् द्रव्यपर्यायावुभाविच्छति नैगमः स्वतन्त्रौ, सामान्यमर्थान्तरभूतमन्यदेवाश्रित सदभिधानप्रत्ययहेतुस्तयोर्निर्निमित्तयोः सर्वथाऽनुपाख्ये प्रवृत्त्यभावात्, व्यावृत्तिबुद्धिहेतुर्भेदकरोऽन्य एव विशेष इति भेदाभ्युपगतेरशुद्धप्रकृतित्वम्, व्यवहारोऽप्यशुद्धप्रकृतिरेव, परस्परविभिन्नरूपैरर्थैः सव्यवहार सिध्यतीत्यभिप्रायात्, नैगमस्य वा सङ्ग्रहव्यवहारानुप्रवेशाच्छुद्धाशुद्धप्रकृतित्व द्रव्यास्तिकस्य, तत्र सङ्ग्रहाभिप्रायानुसारि द्रव्यास्तिकम्, व्यवहारनयानुसारि मातृकापदास्तिकम्, शुद्धाशुद्धप्रकृतिद्वयसन्दर्शनार्थं द्विधोपादानम्, सर्ववस्तुसल्लक्षणत्वादसत्प्रतिषेधेन सर्वसङ्ग्रहादेशो द्रव्यास्तिकम्, नहि सता किञ्चिदनाविष्टमस्ति द्रव्येण वा, तच्च निर्भेदत्वाल्लोकयात्राप्रवृत्तिबहिर्मुखम्, अत एव व्यवहारप्रवृत्तिस्त्यागोपादानोपेक्षारूपेण वस्तुषु प्रायो भेदसमाश्रया, स च भेदो मातृकापदास्तिकनिबन्धनः, व्यवहारस्याशुद्धप्रकृतित्वाल्लोकव्यवहारप्रसाधनाय द्रव्यास्तिक भिनत्ति व्यवहारनय', किमन्यद्धर्माधर्माकाशपुद्गलजीवास्तिकायेभ्यस्तद्द्रव्यास्तिक नाम? ते चास्तिकायाः परस्पर भिन्नस्वभावास्तुल्येऽपि हि द्रव्यत्वे न धर्मास्तिकायो भवत्यधर्मास्तिकायः, पक्वापक्ववत्, तथेतरेऽपि विविक्ता एव लोकयात्रा वर्तयन्ति, सन्मात्र शुद्धद्रव्य मात्र वा विद्यमानमपि न जातुचिद् व्यवहारक्षमम्, अत' स्थूलकतिपय-

मातृकापदास्तिकम् व्यवहारयोग्यविशेषप्रधान मातृकापदास्तिकम्, एते च धर्मास्तिकादय' समस्तसामान्यविशेषपर्यायाश्रयत्वान्मातृकापदशब्दवाच्या', मातृका ह्यशेषवर्णपदवाक्यप्रकरणादिविकल्पाना योनि•, इत्थ धर्मादयोऽपि व्यवहारनिबन्ध-

नानेकपर्यायोपघ्नारतद्विपरीतपर्यायाश्रयाश्च तत्र तत्र व्यवह्रियन्ते व्यवहारार्थिभिः, अतो मातृकापदमेवास्ति व्यवहारयोग्यत्वात्, न शेषमिति व्यवहारनयाभिप्रायः । सङ्ग्रहव्यवहारौ च प्रत्येकं शतभेदत्वादनेकमुखौ, व्यवहार इति चान्वर्थसञ्ज्ञत्वादेवास्य नयस्य, अवहरणमवहारः, कस्य ? एकसत्त्वस्य, केन ? विशेषेण–घटादिना, नानासत्त्वेन लोकयात्रासिद्धेः ॥

अधुना द्रव्यास्तिकमातृकापदास्तिकाभिहिताविशिष्टवस्तुप्रतिक्षेपेण भेदा एव वस्तुत्वेनावध्रियन्ते पर्यायनयेन, अनवरतोत्पादविनाशप्रवाहमात्रमेव वस्तु सकलव्यवहारनिबन्धनम्, न तु स्थितमस्ति किञ्चित्, आत्मभावलक्षणानन्तरविनाशित्वान्न किञ्चित् केनचिदेकेनाभिन्नेन स्थित्यंशेनावबध्यमानं सम्भाव्यते, तत्राशेषस्थूलसूक्ष्मोत्पादकलापस्य प्रतिपादकमुत्पन्नास्तिकमुत्पन्नेऽस्तिमति, नानुत्पन्ने वान्ध्येयव्योमोत्पलादाविति, योऽप्यात्मलाभक्षणोऽस्ति सन्नित्येवंविधशब्दवाच्यः सोऽप्यभूतप्रादुर्भावः प्राग् नासीत् पश्चाल्लब्धात्माऽस्ति सन्नित्यादिशब्दव्यपदेश्यः, न तु भूत्वाऽस्तिमनुभवन्नस्तीत्याख्यायते, क्रियायाः कृतकत्वात् पचत्यादिवत्, कर्तुश्च तत्सम्बन्धेन कर्तृत्वप्रतिलम्भस्य कृतकत्वान्न स्थितसत्ताकमेकमस्ति किञ्चित्, प्रथमक्षणविलक्षणाश्चोत्तरोत्तरक्षणाः सन्तानाकारेणोपजनमासादयन्ति । तथा पर्यायास्तिकमित्युत्पत्तिमतोऽवश्यं विनश्वरत्वाद् यावन्त उत्पादास्तावन्त एव विनाशा इति विनाशेऽस्तिमति पर्यायास्तिकम्, पर्यायो भेदो विनाशलक्षणः सोऽस्त्येवोत्पन्नस्येति, पर्यायो हि विनाशपर्यायः, यथा प्राप्तपर्यायो देवदत्त इति, समस्तविस्रसाप्रयोगापादितविनाशसूचनाकारि च पर्यायास्तिकम् । अपरे तु वर्णयन्त्यन्यथा उत्पन्नास्तिकं पर्यायास्तिकं च, तत्र सामग्रीग्रहणादेकद्रव्यभाविना पर्यायाणां कालतोऽर्थतो वाऽव्यभिचारिणा यत्र व्यपदेशस्तदुत्पन्नास्तिकं सि[ध्य]मानसिद्धवत्, यथा सिध्यमानः सिद्ध इति कालतोऽर्थतश्चाव्यभिचारी शब्दः, तथैकद्रव्यभाविना पर्यायाणामयुगपद्वृत्तीनां युगपद्ग्रहणात् सामग्रीग्रहणाच्च यत्र व्यपदेशः स पर्यायदेश', यथा स्पर्शादिमतां पुद्गलानामिन्द्रियैर्युगपद्ग्रहणादपि व्यपदेशः क्रियते स्पर्शरसगन्धवर्णवन्त' पुद्गला इति । अपरे व्याचक्षते—

" तेषामुत्पादसम्भक्ते–रुत्पन्नास्तिकदेशना ।
उत्पद्यमानाः पर्यायाः, पर्यायास्तिकमुच्यते ॥ "

तेषामिति । द्रव्यमातृकापदास्तिकभेदानामुत्पादयोगादुत्पन्नास्तिकदेशना, पर्यायनयस्यानुत्पन्नेन व्यवहाराभावात् तदानीमेव सन्, न ह्यनुत्पन्नाः केचिद् द्रव्यादयः सन्ति, अतीतानागतवर्तमानेष्वविशेषात्, यदा पुनरुत्पादसमावेशिनो वर्तमानकालावच्छिन्नाः पर्याया विवक्ष्यन्ते तदोत्पद्यमानावस्थायां पर्यायास्तिकमुच्यते । अन्ये त्वभिदधति—न मातृकापदास्तिकं द्रव्यास्तिकाद् भिद्यत इति द्रव्यनयपरिग्रहः, पर्यायास्तिकं च नोत्पन्नास्तिकाद् विविच्यत इति

पर्यायवादिमतम्

१ ' लाभे क्ष० ' इति क-पाठ । २ ' भूत्वास्ति म० ' इति क-ख-पाठ । ३ अत्र 'क्रियते' इत्यधिक क-पाठः । ४ ' शादिक' इति क-पाठ ।

मानुयायित्वात् तत्सञ्ज्ञासम्बन्धादीनाम्, तत्रादिमद्भिः पर्यायैरर्प्यमाण सतो भावाद् व्येति व्येष्यतीति चानित्यम्, अनाद्यै. पर्यायैरादिश्यमान सत्त्वद्रव्यत्वसञ्ज्ञित्वप्रमेयत्वचेतनत्वमूर्तामूर्तत्वभौतिकत्वेतरत्वग्राह्यत्वादिभिरविनाशधर्मकत्वान्नित्यम्, तद्धि सूक्ष्मोत्पादभङ्गसन्ततिसम्भवेऽपि सत्त्वादिभिराकारैर्नोत्पद्यते नापि विनश्यति। तत्र द्रव्यास्तिकं मातृकापदास्तिकं च द्रव्यनयः, उत्पन्नास्तिकं पर्यायास्तिक च पर्यायनयः । अस्ति मतिरस्येत्यास्तिक, सतः प्रस्तुतत्वात् तदभिसम्बन्धे नपुसकलिङ्गता, द्रव्ये आस्तिक द्रव्यास्तिकम्, मयूरव्यसकादावकृतलक्षणतत्पुरुषप्रक्षेपात्। अथवाऽधिकरणशेषभावविवक्षाया द्रव्यस्यास्तिक द्रव्यास्तिकम्, अथवा आस्तिकमस्तिमति, किं तत्? नयरूप प्रतिपादयितृ, कस्य प्रतिपादकम्? द्रव्यस्य, अतः प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धविवक्षाया षष्ठीसमासश्च। एवं द्रव्यास्तिक स्वरूपम् मातृकापदास्तिकादिष्वपि योज्यम् । द्रव्यमेवाभेद भिद्यते न पर्याय', द्रव्य भवनलक्षण मयूराण्डकरसवदुपारूढसर्वभेदबीज देशकालक्रमव्यङ्ग्यभेदसमरसावस्थमेकरूपं भवन–भूति' सत्त्वमाश्रितसत्तातिरिक्त भेदप्रत्यवमर्शेनाभिन्नमपि भिन्नवदाभासते, तदेव चास्तीति मन्यते, तच्च द्रव्यास्तिकमसङ्कीर्णस्वभावं शुद्धप्रकृतिरूपमेक प्रत्याख्याताशेषविशेषकदम्बक द्रव्यात्मक द्रव्यमात्र सङ्ग्रहप्ररूपणाविषयमभिहितम्, अपर नैगमव्यवहारविषयमशुद्धप्रकृति, यस्माद् द्रव्यपर्यायावुभाविच्छति नैगम' स्वतन्त्रौ, सामान्यमर्थान्तरभूतमन्यदेवाश्रित सदभिधानप्रत्ययहेतुस्तयोर्निर्निमित्तयोः सर्वथाऽनुपाख्ये प्रवृत्त्यभावात्, व्यावृत्तिबुद्धिहेतुर्भेदकरोऽन्य एव विशेष इति भेदाभ्युपगतेरशुद्धप्रकृतित्वम्, व्यवहारोऽप्यशुद्धप्रकृतिरेव, परस्परविभिन्नरूपैरर्थैः सव्यवहार' सिध्यतीत्यभिप्रायात्, नैगमस्य वा सङ्ग्रहव्यवहारानुप्रवेशाच्छुद्धाशुद्धप्रकृतित्व द्रव्यास्तिकस्य, तत्र सङ्ग्रहाभिप्रायानुसारि द्रव्यास्तिकम्, व्यवहारनयानुसारि मातृकापदास्तिकम्, शुद्धाशुद्धप्रकृतिद्वयसन्दर्शनार्थं द्विधोपादानम्, सर्ववस्तुसल्लक्षणत्वादसत्प्रतिषेधेन सर्वसङ्ग्रहादेशो द्रव्यास्तिकम्, नहि सता किञ्चिदनाविष्टमस्ति द्रव्येण वा, तच्च निर्भेदत्वाल्लोकयात्राप्रवृत्तिबहिर्मुखम्, अत एव व्यवहारप्रवृत्तिस्त्यागोपादानोपेक्षारूपेण वस्तुषु प्रायो भेदसमाश्रया, स च भेदो मातृकापदास्तिकनिबन्धनः, व्यवहारस्याशुद्धप्रकृतित्वाल्लोकव्यवहारप्रसाधनाय द्रव्यास्तिक भिनत्ति व्यवहारनयः, किमन्यद्धर्माधर्माकाशपुद्गलजीवास्तिकायेभ्यस्तद्द्रव्यास्तिक नाम? ते चास्तिकायाः परस्पर भिन्नस्वभावास्तुल्येऽपि हि द्रव्यत्वे न धर्मास्तिकायो भवत्यधर्मास्तिकाय, पक्वापक्ववत्, तथेतरेऽपि विविक्ता एव लोकयात्रा वर्तयन्ति, सन्मात्र शुद्धद्रव्य मात्र वा विद्यमानमपि न जातुचिद् व्यवहारक्षमम्, अत स्थूलकतिपयमातृकापदास्तिकम् व्यवहारयोग्यविशेषप्रधान मातृकापदास्तिकम्, एते च धर्मास्तिकादय समस्तसामान्यविशेषपर्यायाश्रयत्वान्मातृकापदशब्दवाच्या, मातृका ह्यशेषवर्णपदवाक्यप्रकरणादिविकल्पाना योनिः, इत्थ धर्मादयोऽपि व्यवहारनिबन्ध-

नानेकपर्यायोपघ्नास्तद्विपरीतपर्यायाश्रयाश्च तत्र तत्र व्यवह्रियन्ते व्यवहारार्थिभिः, अतो मातृकापदमेवास्ति व्यवहारयोग्यत्वात्, न शेषमिति व्यवहारनयाभिप्रायः। सङ्ग्रहव्यवहारौ च प्रत्येकं शतभेदत्वादनेकमुखौ, व्यवहार इति चान्वर्थसञ्ज्ञत्वादेवास्य नयस्य, अवहरणमवहारः, कस्य? एकसत्त्वस्य, केन? विशेषेण-घटादिना, नानासत्त्वेन लोकयात्रासिद्धेः॥

अधुना द्रव्यास्तिकमातृकापदास्तिकाभिहिताविशिष्टवस्तुप्रतिक्षेपेण भेदा एव वस्तुत्वेनावध्रियन्ते पर्यायनयेन, अनवरतोत्पादविनाशप्रवाहमात्रमेव वस्तु सकलव्यवहारनिबन्धनम्, न तु स्थितमस्ति किञ्चित्, आत्मभावलक्षणानन्तरविनाशित्वान्न किञ्चित् केनचिदेकेनाभिन्नेन स्थित्यंशेनावबध्यमान सम्भाव्यते, तत्राशेषस्थूलसूक्ष्मोत्पादकलापस्य प्रतिपादकमुत्पन्नास्तिकमुत्पन्नेऽस्तिमति, नानुत्पन्ने वान्ध्येयव्योमोत्पलादाविति, योऽप्यात्मलाभक्षणोऽस्ति सन्नित्येवंविधशब्दवाच्यः सोऽप्यभूतप्रादुर्भावः प्राग् नासीत् पश्चाल्लब्धात्माऽस्ति सन्नित्यादिशब्दव्यपदेश्यः, न तु भूत्वाऽस्तिमनुभवन्नस्तीत्याख्यायते[1], क्रियायाः कृतकृत्वात् पचत्यादिवत्, कर्तुश्च तत्सम्बन्धेन कर्तृत्वप्रतिलम्भस्य कृतकृत्वान्न स्थितसत्ताकमेकमस्ति किञ्चित्, प्रथमक्षणविलक्षणाश्चोत्तरोत्तरक्षणाः सन्तानाकारेणोपजनमासादयन्ति। तथा पर्यायास्तिकमित्युत्पत्तिमतोऽवश्यं विनश्वरत्वाद् यावन्त उत्पादास्तावन्त एव विनाशा इति विनाशेऽस्तिमति पर्यायास्तिकम्, पर्यायो भेदो विनाशलक्षणः सोऽस्त्येवोत्पन्नस्येति, पर्यायो हि विनाशपर्यायः, यथा प्राप्तपर्यायो देवदत्त इति, समस्तविस्रसाप्रयोगापादितविनाशसूचनाकारि च पर्यायास्तिकम्। अपरे तु वर्णयन्त्यन्यथा उत्पन्नास्तिकं पर्यायास्तिकं च, तत्र सामग्रीग्रहणादेकद्रव्यभाविना पर्यायाणां कालतोऽर्थतो वाऽप्यव्यभिचारिणा यत्र व्यपदेशस्तदुत्पन्नास्तिकं सि यमानसिद्धवत्, यथा सिध्यमानः सिद्ध इति कालतोऽर्थतश्चाव्यभिचारी शब्दः, तथैकद्रव्यभाविना पर्यायाणामयुगपद्वृत्तीनां युगपद्ग्रहणात् सामग्रीग्रहणाच्च यत्र व्यपदेशः स पर्यायदेश[2], यथा स्पर्शादिमतां पुद्गलानामिन्द्रियैर्युगपद्ग्रहणादपि व्यपदेशः क्रियते स्पर्शरसगन्धवर्णवन्तः पुद्गला इति। अपरे व्याचक्षते—

"तेषामुत्पादसम्भक्ते—रुत्पन्नास्तिकदेशना।
उत्पद्यमानाः पर्यायाः, पर्यायास्तिकमुच्यते॥"

तेषामिति। द्रव्यमातृकापदास्तिकभेदानामुत्पादयोगादुत्पन्नास्तिकदेशना, पर्यायनयस्यानुत्पन्नेन व्यवहाराभावात् तदानीमेव सन्, न ह्यनुत्पन्नाः केचिद् द्रव्यादयः सन्ति, अतीतानागतवर्तमानेष्वविशेषात्, यदा पुनरुत्पादसमावेशिनो वर्तमानकालावच्छिन्नाः पर्याया विवक्ष्यन्ते तदोत्पद्यमानावस्थाया पर्यायास्तिकमुच्यते[3]। अन्ये त्वभिदधति—न मातृकापदास्तिकं द्रव्यास्तिकाद् भिद्यत इति द्रव्यनयपरिग्रहः, पर्यायास्तिकं च नोत्पन्नास्तिकाद् विविच्यत इति

पर्यायवादिमतम्

१ 'लाभे क्ष०' इति क पाठ। २ 'भूयासि म०' इति क-ख-पाठ। ३ अत्र 'क्रियते' इत्यधिकं क-पाठः। ४ 'णादिक' इति क-पाठ।

मानुयायित्वात् तत्सञ्ज्ञासम्बन्धादीनाम्, तत्रादिमद्भिः पर्यायैरर्प्यमाणं सतो भावाद् व्येति व्येष्यतीति चानित्यम्, अनाद्यैः पर्यायैरादिश्यमान सत्त्वद्रव्यत्वसञ्ज्ञित्वप्रमेयत्वचेतनत्वमूर्तामूर्तत्वभौतिकत्वेतरत्वग्राह्यत्वादिभिरविनाशधर्मकत्वान्नित्यम्, तद्धि सूक्ष्मोत्पादभङ्गसन्ततिसम्भवेऽपि सत्त्वादिभिराकारैर्नोत्पद्यते नापि विनश्यति। तत्र द्रव्यास्तिकं मातृकापदास्तिकं च द्रव्यनयः, उत्पन्नास्तिकं पर्यायास्तिक च पर्यायनयः। अस्ति मतिरस्येत्यास्तिकं, सतः प्रस्तुतत्वात् तदभिसम्बन्धे नपुंसकलिङ्गता, द्रव्ये आस्तिक द्रव्यास्तिकम्, मयूरव्यंसकादावकृतलक्षणतत्पुरुषप्रक्षेपात्। अथवाऽधिकरणशेषभावविवक्षाया द्रव्यस्यास्तिकं द्रव्यास्तिकम्, अथवा आस्तिकमस्तिमति, किं तत्? नयरूप प्रतिपादयितृ, कस्य प्रतिपादकम्? द्रव्यस्य, अतः प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धविवक्षाया षष्ठीसमासश्च। एवं

द्रव्यास्तिक स्वरूपम् मातृकापदास्तिकादिष्वपि योज्यम्। द्रव्यमेवाभेद भिद्यते न पर्यायः,

द्रव्य भवनलक्षण मयूराण्डकरसवदुपारूढसर्वभेदबीजं देशकालक्रमव्यङ्ग्यभेदसमरसावस्थमेकरूप भवनं–भूति' सत्त्वमाश्रितसत्तातिरिक्त भेदप्रत्ययमर्शेनाभिन्नमपि भिन्नवदाभासते, तदेव चास्तीति मन्यते, तच्च द्रव्यास्तिकमसङ्कीर्णस्वभाव शुद्धप्रकृतिरूपमेक प्रत्याख्याताशेषविशेषकदम्बक द्रव्यात्मक द्रव्यमात्र सङ्ग्रहप्ररूपणाविषयमभिहितम्, अपर नैगमव्यवहारविषयमशुद्धप्रकृति, यस्माद् द्रव्यपर्यायावुभाविच्छति नैगमः स्वतन्त्रौ, सामान्यमर्थान्तरभूतमन्यदेवाश्रित सदभिधानप्रत्ययहेतुस्तयोर्निर्निमित्तयोः सर्वथाऽनुपाख्ये प्रवृत्त्यभावात्, व्यावृत्तिबुद्धिहेतुर्भेदकरोऽन्य एव विशेष इति भेदाभ्युपगतेरशुद्धप्रकृतित्वम्, व्यवहारोऽप्यशुद्धप्रकृतिरेव, परस्परविभिन्नरूपैरर्थै' सव्यवहार' सिध्यतीत्यभिप्रायात्, नैगमस्य वा सङ्ग्रहव्यवहारानुप्रवेशाच्छुद्धाशुद्धप्रकृतित्व द्रव्यास्तिकस्य, तत्र सङ्ग्रहाभिप्रायानुसारि द्रव्यास्तिकम्, व्यवहारनयानुसारि मातृकापदास्तिकम्, शुद्धाशुद्धप्रकृतिद्वयसन्दर्शनार्थं द्विधोपादानम्, सर्ववस्तुसल्लक्षणत्वादसत्प्रतिषेधेन सर्वसङ्ग्रहादेशो द्रव्यास्तिकम्, नहि सता किञ्चिदनाविष्टमस्ति द्रव्येण वा, तच्च निर्भेदत्वाल्लोकयात्राप्रवृत्तिनिर्बहिर्मुखम्, अत एव व्यवहारप्रवृत्तिस्त्यागोपादानोपेक्षारूपेण वस्तुषु प्रायो भेदसमाश्रया, स च भेदो मातृकापदास्तिकनिबन्धनः, व्यवहारस्याशुद्धप्रकृतित्वाल्लोकव्यवहारप्रसाधनाय द्रव्यास्तिक भिनत्ति व्यवहारनय', किमन्यद्धर्माधर्माकाशपुद्गलजीवास्तिकायेभ्यस्तद्द्रव्यास्तिक नाम? ते चास्तिकायाः परस्पर भिन्नस्वभावास्तुल्येऽपि हि द्रव्यत्वे न धर्मास्तिकायो भवत्यधर्मास्तिकाय, पकापक्ववत्, तयेतरेऽपि विविक्ता एव लोकयात्रा वर्तयन्ति, सन्मात्र शुद्धद्रव्य

मात्र वा विद्यमानमपि न जातुचिद् व्यवहारक्षमम्, अत' स्थूलकतिपय-

मातृकापदास्तिकम् व्यवहारयोग्यविशेषप्रधान मातृकापदास्तिकम्, एते च धर्मास्तिकादयः समस्तसामान्यविशेषपर्यायाश्रयत्वान्मातृकापदशब्दवाच्या',

मातृका ह्यशेषवर्णपदवाक्यप्रकरणादिविकल्पाना योनि', इत्थं धर्मादयोऽपि व्यवहारनिबन्ध-

तदा पलालं न भवतीत्यतो नैतावेकस्यार्थस्य प्रत्यायनाय सम्यग्ज्ञानोपजननकारणम्, शब्दान्तरापत्त्यसहिष्णुत्वात् प्रमत्तगीतावेतानिति ॥

एव घटाद्युदाहरणभावना कार्या, एव च सदेकक्षणवृत्त्येन, नित्यं पुनर्नैवास्ति वस्तु किञ्चिदिति। एवमृजुसूत्रनयेन निरूपिते वस्तुनि शब्दनयस्तद्व्याचिख्यासयेमाह–शब्दप्रयोगोऽर्थगत्यर्थः, तत्र वक्तुरर्थानुविधायी शब्दोऽर्थवशात् तस्य शब्दप्रयोगः, श्रोतुः पुनः शब्दवशादर्थप्रतिपत्तिरिति शब्दानुविधाय्यर्थः, शब्दनयाश्च शब्दानुरूपमर्थमिच्छन्ति, यथा शब्दस्तथाऽर्थोऽपि प्रतिपत्तव्यः, समनन्तरनयप्रतिपादित वर्तमानरूपप्रधान वस्तु सूक्ष्मतरेण शब्देन भिद्यते, ऋजुसूत्रस्तु वर्तमानानेकधर्मरूपमपि घटशब्देनाभिधीयमान सम्यगभ्युपैति, यथा मृद्घटोऽस्ति घटो द्रव्य घट इति, यद्यसौ मृद्रूपेण द्रव्यतया च न स्यादमृद्द्रव्य च घटः स्यात्, अतः सोऽसौ तेन रूपेण वृत्तत्वाद् वर्तमानरूपवटनदिति। शब्दनयस्तु वर्तमानकालवृत्तमपि लिङ्गसङ्ख्यापुरुषकालादिभिन्नमवस्त्वेव मन्यते, स्त्रीपुनपुंसकलिङ्गाना गुणानां भिन्नत्वात्, मृद्घटो द्रव्यमिति न सामानाधिकरण्यम्, यथा गौरश्वः, सस्त्यानप्रसवस्थितिलक्षणाः परस्परविरुद्धाः खल्वेते गुणाः शीतोष्णादिवत्, मृदादिशब्दाच्च भिन्नरूपप्रत्ययप्रसवो दृष्टः, पटकुटादिभिन्नध्वनिवत्, तस्माल्लिङ्गादिभिन्नमसम्यगभिधानम्, तस्यार्थस्य तेन रूपेणाभूतत्वात्, कातरे शूरशब्दप्रयोगवदिति, एव चाभिन्नलिङ्गसङ्ख्याद्युच्यमान वस्तु वस्तुतामधिवसति, तेन रूपेण वृत्तत्वात्, यथा शूरे शूरशब्दप्रयोगः, समानलिङ्गशब्दाभिधेयतायां च वस्तुनः पर्यायान्तरैः सामानाधिकरण्यं सिध्यति, घटः कुटो हस्ती दन्ती चेति ॥

एव शब्दनयेनर्जुसूत्रे व्यावर्तिते वस्तुनि चाभिन्नलिङ्गादिशब्दवाच्ये प्रतिष्ठापिते वर्तमानस्याभिन्नलिङ्गादिकस्य वस्तुनः सूक्ष्मतर भेदमभिधत्ते समभिरूढनयः। न जातुचित् पर्यायान्तरैकाधिकरण्येन शब्दैरुच्यमान वस्तु यथावस्थितमुक्तं भवति, सञ्ज्ञानिमित्तभेदाद्। द्विविधा सञ्ज्ञा–पारिभाषिकी नैमित्तिकी च, तत्र पारिभाषिकी नार्थतत्त्व ब्रवीति, यदृच्छामात्रप्रवृत्तत्वात्, नैमित्तिकी तु सर्वैव सञ्ज्ञा युक्ता, यथाऽऽह—

"नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्।
यन्न विशेषपदार्थसमुत्थ, प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥"

एवं च सर्वे क्रियानिमित्ताः शब्दाः धातुजत्वान्निमित्तभेदाच्चार्थभेदो दृष्टश्छत्रिदण्ड्यादिवत्, अतो या या सञ्ज्ञामभिधत्ते ता ता समभिरोहतीति समभिरूढस्तामेवैकामारोहति, द्वितीया निमित्तान्तरवृत्ता न क्षमते, तस्माद् वर्तमानेनाभिन्नलिङ्गादिनाऽप्येकेनैव ध्वनिनाभिधीयमानोऽर्थः सम्यगुक्तो भवति, नान्यथेति ॥

क्रियाभेदादियं समभिरूढनयेन प्रतिपादिते वस्तुन्येवभूतनयः तद्वस्तु सूक्ष्मतरभेद प्रति-

---

१ 'तस्य प्रयोग' इति क ख पाठ । २ 'लमपि' इति क–पाठ । ३ 'रूढो नय' इति क–ख–पाठ ।

पर्यायनयपरिग्रहः, तदेवं चतुर्भिरपि विकल्पैर्नयद्वयी प्रतिपिपादयिषिता, एव तर्हि द्रव्यादिचतुष्टयी किमर्थेति चेत्, तदुच्यते—उभयनयस्वभावप्रदर्शनार्था चतुष्टयी। एवमेतान्यन्यव्याख्यानान्यालोच्य भाष्यं कथमपि गमनीयम्, स्वव्याख्यानानुसारेण तावदुच्यते पर्यायनयश्चोत्पादविनाशाद् द्वैविध्यप्रदिदर्शयिषया भाष्यकारेणोपचक्रमे, उत्पन्नास्तिकं पर्यायास्तिकमिति। स एष पर्यायनयमहाविटपी प्रौढदृढानवद्यर्जुसूत्रनयादभ्रस्कन्धः सुप्रतिष्ठिताधारनानागमगहनशब्दनयशाखस्तदाश्रयसमभिरूढैवंभूतविविधविकल्पप्रशाखोऽर्थशब्दज्ञानशून्यताङ्कुरपत्रपुष्पफलोपशोभितः पर्यायप्रधानत्वादुत्पादविनाशमात्रजलावसेकसंवर्धनीयः प्रतन्यते, तत्रर्जुसूत्रः कुटिलातीतानागतपरिहारेण वर्तमानक्षणावच्छिन्नवस्तुसत्तामात्रमृजु सूत्रयति—अन्यतो व्यवच्छिनत्ति सूत्रपातवत्, न ह्यतीतमनागतं वाऽस्ति, यदि स्यातामतीतानागते न तर्हि मृतपुत्रिका युवतिः पुत्रकमुद्दिश्य रुद्यात्, न च पुत्रार्थिनी योषिदौपयाजिकादिविशिष्टदेवतासन्निधौ विदध्यात्, तद्धि वस्तु वर्तमानक्षणावस्थाय्येव, न जातुचित् ततः परं सत्तामनुभवति, नाप्यतीतकालासादितात्मलाभं किञ्चित् तत्रान्वेति, स्वकारणकलापसामग्रीसन्निधावुत्पाद्य स्वरसभङ्गुरतामवलम्बन्ते तत्क्षणमात्रावलम्बिनः सर्वसंस्काराः। एवं च सति य एते कर्तृभूतद्रव्यशब्दसन्निधौ क्रियाशब्दाः प्रयुज्यन्ते यथा देवदत्तः पचति पठति गच्छतीति कर्मभूतद्रव्यशब्दसन्निधौ वा यथा घटो भिद्यते घटं वा भिनत्तीत्येवमादयो न यथार्थाः, कथम् ? यतो नामशब्देनाविकृतरूपस्य द्रव्यस्याभिधानात्, क्रियाशब्देन च विकारस्य प्रतिपाद्यत्वात्, न च विकाराविकारयोरैकाधिकरण्यमस्ति, विरुद्धत्वात्, अर्थप्रत्यायनाय हि प्रयुक्तः शब्दो विरुद्धमर्थं प्रतिपादयन्नैव सम्यग्ज्ञानमाधत्ते, अयथार्थत्वात्, मृगतृष्णायां सलिलशब्दवदिति उक्तार्थसंवादी च श्लोको गीतः पुराविदा—

ऋजुसूत्रादिभिः पर्यायपक्ष

" पलालं न दहत्यग्नि–र्भिद्यते न घटः क्वचित्।
नासयतः प्रव्रजति भव्यो–ऽसिद्धो न सिद्ध्यति ॥

पलालं दह्यत इति यद् व्यवहारस्य वाक्यं तद् विरुध्यते, अत्र वाक्ये वाक्यार्थप्रतिपत्तये पदार्थप्रविभागकाले पललशब्दो विशिष्टाकारद्रव्यवचनो नाम शब्दः तद्धि द्रव्यं यावत् तस्मिन्नेवाकारे वर्तते तावदेव पलालशब्दवाच्यम्, अन्यदा तु पलालभावेन तस्याभाव एव, तद्भावेनाभावात् पटवत्, तस्मात् स्थिररूपमव्यापारमुदासीनमविकृतं पलालशब्देन वस्तु प्रतिपादितम्, कथं तदेव दह्यत इत्यनेन शब्देनोच्येत ? क्रियाशब्दस्य विकाराभिधायित्वात्, न हि स एवार्थो विकारश्चाविकारश्च भवितुमुत्सहते, यदि हि तत् पलालं न तर्हि तदेव दह्यते, अविपरिणतत्वात्, प्रागवस्थावत्, विपरिणममानं च पलालमेव तन्न भवति, विपरिणामशब्दस्य भावान्तरवाचित्वात्, तस्माद् यावत् तत् पलालं तावन्न दह्यते, यदा दह्यते

१ ' सिद्ध्यते' इति क-पाठः ।

बन्धनद्वित्वादिसङ्ख्याव्यवहारः सकललोकयात्राक्षमः सिद्ध्यतीति द्रव्ये वा द्रव्याणि वेत्याह, अन्यथैकसङ्ख्याऽपि न स्याद्, व्यवहारस्य वा शतभेदत्वात् कश्चिदशः

द्रव्यास्तिके नैगमः प्रतिपन्नदेशकालसङ्ख्यभेदः प्रतिमन्यते द्रव्ये वा द्रव्याणि वेति विकल्पसम्भवः, सच त्रिविधमुत्पादादि, तच्च द्रव्येणार्प्यमाणमङ्गीकृतसङ्ख्याभेदमेवात्मलाभ प्रतिपद्यते, द्रव्य वा द्रव्ये वा द्रव्याणि वेति, न तु कदाचिद् वचननयप्रतिपाद्यद्रव्य व्यतिरेकेणान्यत् किञ्चित् सदस्ति, यतो द्रव्यमित्यपदिष्टे सत् प्रतीयते, द्रव्ये इत्यपि सती, द्रव्याणि च सन्तीत्येव व्यस्तेषु समस्तेषु च प्रतीयते द्रव्येष्वेव सत्, द्रव्यमात्रे नियतवृत्तित्वात्, द्रव्यव्यतिरिक्तपदार्थाभावाच्चान्यत्र नोपलभ्यते, यदि स्यादद्रव्य किञ्चिद् गुणः कर्मादि वा तत्राप्याशङ्केत सतो वृत्तिः, तत् तु नैवास्तीत्ययमर्थोऽनेन भाष्यवचनेन प्रत्याय्यते—असन्नाम नास्ति, असदिति यस्य नाम सञ्ज्ञिनस्तत्सञ्ज्ञिरूपमसन्नामक नास्ति, सञ्ज्ञिरूपाभावाद् वा संज्ञा नास्ति, परस्परापेक्षत्वात् सञ्ज्ञासञ्ज्ञिनोः, एवं चासच्छब्देन गुणाद्यभाव एवोच्यते, स च गुणाद्यभावो द्रव्यमात्रमेव द्रव्यास्तिकस्येत्युक्तेन प्रकारेण द्रव्यार्थिकस्यार्थपदभावना । अन्ये भाष्यमेवं पठन्ति—असन्नाम नास्त्येव सावधारणोऽसतः प्रतिषेधः,

द्रव्यास्तिके सग्रहः सर्वं द्रव्यमिति सञ्ज्ञिपक्षतो द्रव्यास्तिकस्य हि मातृकापदास्तिकाद्यपि सर्वमन्तर्वसतीति, तस्मात् सदित्युक्ते एषामेकत्वद्वित्वबहुत्वानामन्यतमोक्तौ तदवरोधः सन्मात्रत्वादिति । एव सङ्ग्रहनयेन स्वाभिप्राये द्रव्यास्तिकमात्रतया प्रकाशिते व्यवहारनयः स्वाभिप्रायमाविष्करोति मातृकापदास्तिकोपन्यासेन—

**भा०—मातृकापदास्तिकस्यापि मातृकापदं वा मातृकापदे[1] वा मातृकापदानि वा सत् । अमातृकापदं वा अमातृकापदे वा अमातृकापदानि वाऽसत् ।**

**टी०—मातृकापदास्तिकस्यापीत्यादि ।** धर्मास्तिकायादीनामुद्देशमात्र मातृकापदास्तिकलक्षणम्, एव मन्यते व्यवहारः—न द्रव्यमात्रमभेद सत् सञ्ज्ञास्वालक्षण्यादिशून्य व्यवहर्तॄणां लौकिकपरीक्षकाणा धिय धिनोति, व्यवहारार्थश्च वस्त्वभ्युपगमः, स च भेदेन प्रायः साध्यते, त्वयाऽपि च भेद एव प्रदर्शितो द्रव्य वा द्रव्ये वा द्रव्याणि वेति, एकस्मिन्नर्थे एकवचन द्वयोरर्थयोर्द्विवचन बहुष्वर्थेषु च बहुवचनमित्येव सतो भेदिका सङ्ख्या, न च द्रव्यसतोर्भेदस्तद्द्रव्यमेव सत्सदेव द्रव्यम्, यच्चैकसङ्ख्यावच्छिन्न सत् तन्न द्वित्वा-

द्रव्यास्तिके व्यवहारः दिसङ्ख्ययाऽऽश्रयितु शक्यम्, न ह्येको द्वौ, द्वौ वा एक इत्येव लोकव्यवहारप्रवणेन भेदोऽभ्युपेयः, किं तद् द्रव्य धर्माधर्माकाशपुद्गलजीवभेदं गतिस्थित्यवगाहशरीरादिपरस्परोपग्रहणाद्युपकारि सञ्ज्ञास्वलक्षणादिविविक्त सव्यवहारप्रापणप्रत्यल भवति ? निर्भेद पुनर्वस्तु न काञ्चिद् व्यवहारमात्रामभिमुखीकरोति, भेदप्रधानतायां तु

1 'मातृकायपि' इति क-पाठ ।

पादयितुमुपक्रमते—यदि घटत इति घटः क्रियानिमित्तशब्दवाच्योऽभ्युपेतस्त्वया ततो यत् तन्निमित्त सा क्रिया यदैव वर्तमाना तदैव नैमित्तिकः शब्दो युक्तश्चित्रकारादिवत्, तस्माद् यदैव घटते–चेष्टते तदैव घटः, तन्निमित्ताभावे पटादिवदेवासौ न घटः, न चातीतानागतनिमित्तसम्बन्धः, तयोरभावात्, न ह्यतीत भावि वा छत्रदण्डादि छत्रिदण्ड्यादीनां निमित्तं युज्यते, यदि स्यात्, त्रैलोक्यस्य छत्रिदण्डित्वप्रसङ्गः, अतो घटमान एव घटः, क्रियाविशिष्टस्यैव घटता, ततश्च घटशब्देनापि नैवासौ सर्वदा वाच्य इति, एवमेष पर्यायनयः ( सूक्ष्म )सूक्ष्मतरभेदस्तावदाधावति यावज्ज्ञानमात्रमवशिष्यते शून्यता वा, न त्विह सकलक्रमभेदाख्यानं क्रियतेऽन्यत्र प्रपञ्चितत्वात् । एवमेतयोर्द्रव्यास्तिकपर्यायास्तिकयोर्वचनचतुष्टयोपात्तयोः परस्परापेक्षयोरर्पणानर्पणविशेषतः सम्भवद्भिर्विकल्पैर्भोप्यकृत् स्वयमेव सन्नित्यादिभेदभावनां करोति—

**भा०—एषामर्थपदानि द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत् । असन्नाम नास्त्येव द्रव्यास्तिकस्य ।**

टी०—एषामर्थपदानीत्यादि । एषां–द्रव्यपर्यायनयभेदानां द्रव्यास्तिकादीनां चतुर्णाम् अर्थानि पदानि अर्थपदानि द्रव्य वा द्रव्ये वा इत्यादीनि, द्रव्यास्तिकादीनां योऽर्थोऽभिधेयो–वाच्यस्तत्प्रतिपादनप्रयोजनान्येकत्वादीनि युक्तानि द्रव्यादीनि, एभिर्हि द्रव्यास्तिकादीनि व्याख्यायन्ते विकल्पैस्तेषां चार्थाभिधानप्रत्ययभेदेन भिन्नानामन्तरङ्गाभिधानप्रत्ययपदापेक्षया बहुतिथविद्वज्जनाभिमतबहिरङ्गार्थपदचिन्ता क्रियते, तिष्ठता तावदभिधानप्रत्ययावित्यर्थपदमेव प्राक् प्रदर्श्यत इत्यर्थः । तत्र द्रव्य भव्य योग्य स्वपर्यायपरिणतेः सर्वं धर्मादि भेदवाद्यभिमतमभिन्नलक्षणार्पणयैकत्वेन विवक्ष्यते द्रव्यमिति द्रव्यस्वभावात्यागात्, न च द्रव्यव्यतिरिक्त गुणकर्मादि किञ्चिदस्ति, रूपरसादयस्तद्द्रव्यद्वारेणैवोपलब्धिमार्गमवतरन्तो द्रव्यवृत्तिमात्रत्वेनावधार्यन्ते, न भिन्नजातीयत्वेन, चक्षुरादिग्रहणभेदात् तु वृत्तयस्तास्तस्य भिद्यन्ते, पितृपुत्रमातुलत्वाद्यनेकसम्बन्धिसम्बन्धविशिष्टपुरुषवत्, अभिन्नस्यैकस्य जिनदत्तादेर्जन्यजनकाद्यनेकसम्बन्धापेक्षा पित्रादिव्यपदेशाः प्रवर्तन्ते, न तु तस्मात् पुरुषवस्तुनोऽर्थान्तरभूत पितृत्व नामार्थो जात्यन्तरमस्ति, पुरुषवृत्तिमात्रत्वात्, तथा द्रव्यमपि चक्षुर्ग्रहणादिविषयभूयमासादयद् रूपादिव्यपदेशमनेकमासादयति, अतोऽनर्थान्तर रूपरसादयो द्रव्यादिति, कर्मापि विस्रसाप्रयोगसापेक्षो द्रव्यपरिणामस्तद्भावलक्षणो द्रव्यादव्यतिरिच्यमानो द्रव्यमेव, सामान्यविशेषयोरपि तदग्रहे तद्बुद्ध्यभावात् द्रव्यमात्रतैवेति, एवमेकमेव द्रव्य शुद्धप्रकृतेर्द्रव्यार्थस्य । अविशुद्धद्रव्यार्थभेदनैगमस्त्वभिन्नद्रव्येण व्यवहाराभावाद् भेदनि-

द्रव्यमतनिरूपणम्

१ 'नास्ति' इति ग-पाठ । २ 'बहुविध' इति क-ख-पाठ । ३ ' भूयसा मद्रूपाद्' इति क-पाठ ।

बन्धनद्वित्वादिसङ्ख्याव्यवहारः सकललोकयात्राक्षमः सिद्ध्यतीति द्रव्ये वा द्रव्याणि वेत्याह, अन्यथैकसङ्ख्याऽपि न स्याद्, व्यवहारस्य वा शतभेदत्वात् कश्चिदंशः

द्रव्यास्तिके नैगमः प्रतिपन्नदेशकालसङ्ख्याभेदः प्रतिमन्यते द्रव्ये वा द्रव्याणि वेति विकल्पसम्भवः, स च त्रिविधमुत्पादादि, तच्च द्रव्येणार्प्यमाणमङ्गीकृतसङ्ख्याभेदमेवात्मलाभं प्रतिपद्यते, द्रव्यं वा द्रव्ये वा द्रव्याणि वेति, न तु कदाचिद् वचनत्रयप्रतिपाद्यद्रव्यव्यतिरेकेणान्यत् किञ्चित् सदस्ति, यतो द्रव्यमित्यपदिष्टे सत् प्रतीयते, द्रव्ये इत्यपि सती, द्रव्याणि च सन्तीत्येव व्यस्तेषु समस्तेषु च प्रतीयते द्रव्येष्वेव सत्, द्रव्यमात्रे नियतवृत्तित्वात्, द्रव्यव्यतिरिक्तपदार्थाभावाच्चान्यत्र नोपलभ्यते, यदि स्यादद्रव्यं किञ्चिद् गुणः कर्मादि वा तत्राप्याशङ्केत सतो वृत्तिः, तत् तु नैवास्तीत्ययमर्थोऽनेन भाष्यवचनेन प्रत्याय्यते—**असन्नाम नास्ति**, असदिति यस्य नाम संज्ञिनस्तत्संज्ञिरूपमसन्नामकं नास्ति, संज्ञिरूपाभावाद् वा संज्ञा नास्ति, परस्परापेक्षत्वात् संज्ञासंज्ञिनोः, एवं चासच्छब्देन गुणाद्यभाव एवोच्यते, स च गुणाद्यभावो द्रव्यमात्रमेव द्रव्यास्तिकस्येत्युक्तेन प्रकारेण द्रव्यार्थिकस्यार्थपदभावना । अन्ये भाष्यमेवं पठन्ति—**असन्नाम नास्त्येव** सावधारणोऽसतः प्रतिषेधः,

द्रव्यास्तिके सङ्ग्रहः सर्वं द्रव्यमिति संजिघृक्षतो द्रव्यास्तिकस्य हि मातृकापदास्तिकायपि सर्वमन्तर्वसतीति, तस्मात् सदित्युक्ते एषामेकत्वद्वित्वबहुत्वानामन्यतमोक्तौ तदवरोधः सन्मात्रत्वादिति । एवं सङ्ग्रहनयेन स्वाभिप्राये द्रव्यास्तिकमात्रतया प्रकाशिते व्यवहारनयः स्वाभिप्रायमाविष्करोति मातृकापदास्तिकोपन्यासेन—

**भा०—मातृकापदास्तिकस्यापि मातृकापदं वा मातृकापदे[1] वा मातृकापदानि वा सत् । अमातृकापदं वा अमातृकापदे वा अमातृकापदानि वाऽसत् ।**

**टी०—मातृकापदास्तिकस्यापीत्यादि** । धर्मास्तिकायादीनामुद्देशमात्रं मातृकापदास्तिकलक्षणम्, एवं मन्यते व्यवहारः—न द्रव्यमात्रमभेदं सत् संज्ञास्वालक्षण्यादिशून्यं व्यवहर्तॄणां लौकिकपरीक्षकाणां धियं धिनोति, व्यवहारार्थश्च वस्त्वभ्युपगमः, स च भेदेन प्रायः साध्यते, त्वयाऽपि च भेद एव प्रदर्शितो द्रव्यं वा द्रव्ये वा द्रव्याणि वेति, एकस्मिन्नर्थे एकवचनं द्वयोरर्थयोर्द्विवचनं बहुष्वर्थेषु च बहुवचनमित्येव सतो भेदिका सङ्ख्या, न च द्रव्यसतोर्भेदस्तद्द्रव्यमेव सत्सदेव द्रव्यम्, यच्चैकसङ्ख्यावच्छिन्नं सत् तन्न द्वित्वा-

द्रव्यास्तिके व्यवहारः दिसङ्ख्ययाऽऽश्रयितुं शक्यम्, न ह्येको द्वौ, द्वौ वा एक इत्येव लोकव्यवहारप्रवणेन भेदोऽभ्युपेयः, किं तद् द्रव्यं धर्माधर्माकाशपुद्गलजीवभेदं गतिस्थित्यवगाहशरीरादिपरस्परोपग्रहणाद्युपकारि संज्ञास्वलक्षणादिविविक्तं सव्यवहारप्रापणमत्यलं भवति ? निर्भेदं पुनर्वस्तु न काञ्चिद् व्यवहारमात्रामभिमुखीकरोति, भेदप्रधानतया तु

---

१ 'मातृकाद्यपि' इति क पाठः ।

पादयितुमुपक्रमते—यदि घटत इति घटः क्रियानिमित्तशब्दवाच्योऽभ्युपेतस्त्वया ततो यद् तन्निमित्त सा क्रिया यदैव वर्तमाना तदैव नैमित्तिकः शब्दो युक्तश्चित्रकारादिवत्, तस्माद् यदैव घटते—चेष्टते तदैव घटः, तन्निमित्ताभावे पटादिवदेवासौ न घटः, न चातीतानागतनिमित्तसम्बन्धः, तयोरभावात्, न ह्यतीत भावि वा छत्रदण्डादि छत्रिदण्ड्यादीनां निमित्तं युज्यते, यदि स्यात्, त्रैलोक्यस्य छत्रिदण्डित्वप्रसङ्गः, अतो घटमान एव घटः, क्रियाविशिष्टस्यैव घटता, ततश्च घटशब्देनापि नैवासौ सर्वदा वाच्य इति, एवमेष पर्यायनयः ( सूक्ष्म )सूक्ष्मतरभेदस्तावदाधावति यावज्ज्ञानमात्रमवशिष्यते-शून्यता वा, न त्विह सकलक्रमभेदाख्यानं क्रियतेऽन्यत्र प्रपञ्चितत्वात् । एवमेतयोर्द्रव्यास्तिकपर्यायास्तिकयोर्वचनचतुष्टयोपात्तयोः परस्परापेक्षयोरर्पणानर्पणविशेषतः सम्भवद्भिर्विकल्पैर्भाष्यकृत् स्वयमेव सन्नित्यादिभेदभावनां करोति—

भा०—एषामर्थपदानि द्रव्यं वा द्रव्ये वा द्रव्याणि वा सत् । असन्नाम नास्त्येव द्रव्यास्तिकस्य ।

टी०—एषामर्थपदानीत्यादि । एषां–द्रव्यपर्यायनयभेदानां द्रव्यास्तिकादीनां चतुर्णाम् अर्थानि पदानि अर्थपदानि द्रव्य वा द्रव्ये वा इत्यादीनि, द्रव्यास्तिकादीना योऽर्थोऽभिधेयो–वाच्यस्तत्प्रतिपादनप्रयोजनान्येकत्वादीनि युक्तानि द्रव्यादीनि, एभिर्हि द्रव्यास्तिकादीनि व्याख्यायन्ते विकल्पैस्तेषां चार्थाभिधानप्रत्ययभेदेन भिन्नानामन्तरङ्गाभिधानप्रत्ययपदापेक्षया बहुतिथविद्वज्जनाभिमतबहिरङ्गार्थपदचिन्ता क्रियते, तिष्ठता तावदभिधानप्रत्ययावित्यर्थपदमेव प्राक् प्रदर्श्यत इत्यर्थः । तत्र द्रव्य भव्यं योग्य स्वपर्यायपरिणतेः सर्वं धर्मादि भेदवाद्यभिमतमभिन्नलक्षणार्पणयैकत्वेन विवक्ष्यते द्रव्यमिति द्रव्यस्वभावात्यागात्, न च द्रव्यव्यतिरिक्त गुणकर्मादि किञ्चिदस्ति, रूपरसादयस्तद्द्रव्यद्वारेणैवोपलब्धिमार्गमवतरन्तो द्रव्यवृत्तिमात्रत्वेनावधार्यन्ते, न भिन्नजातीयत्वेन, चक्षुरादिग्रहणभेदात् तु वृत्तयस्तास्तस्य भिद्यन्ते, पितृपुत्रमातुलत्वाद्यनेकसम्बन्धिसम्बन्धविशिष्टपुरुषवत्, अभिन्नस्यैकस्य जिनदत्तादेर्जन्यजनकाद्यनेकसम्बन्धापेक्षा पित्रादिव्यपदेशाः प्रवर्तन्ते, न तु तस्मात् पुरुषवस्तुनोऽर्थान्तरभूत पितृत्व नामार्थो जात्यन्तरमस्ति, पुरुषवृत्तिमात्रत्वात्, तथा द्रव्यमपि चक्षुर्ग्रहणादिविषयभूयमासादयद् रूपादिव्यपदेशमनेकमासादयति, अतोऽनर्थान्तर रूपरसादयो द्रव्यादिति, कर्मापि विस्रसाप्रयोगसापेक्षो द्रव्यपरिणामस्तद्भावलक्षणो द्रव्यादव्यतिरिच्यमानो द्रव्यमेव, सामान्यविशेषयोरपि तद्ग्रहे तद्बुद्ध्यभावात् द्रव्यमात्रत्वैवेति, एवमेकमेव द्रव्य शुद्धप्रकृतेर्द्रव्यार्थस्य । अविशुद्धद्रव्यार्थभेदनैगमस्त्वभिन्नद्रव्येण व्यवहाराभावाद् भेदनि-

द्रव्यमतनिरूपणम्

१ 'नास्ति' इति ग-पाठः । २ 'बहुविध' इति क-ख-पाठः । ३ 'भूयसा मत्रूपाणि' इति क-पाठः ।

तस्मादुत्पन्न एवास्ति क्षणः, तस्मिंश्च नान्वयि किञ्चिद् द्रव्यत्वादि विद्यते, ततश्च भूतान्वेषिणो न द्रव्यास्तिकं न मातृकापदास्तिकं किञ्चिदस्ति, उत्पन्नास्तिकमेव तु सत्, सन्तत्या द्रव्यं वा धर्मादि वाऽभिधीयते, न भूततस्तदस्ति, सन्तानस्य सांवृतत्वात्, ते च वर्तमानक्षणा भूयासः, तत्रैकक्षणविवक्षायामुत्पन्नास्तिकं सदिति विकल्पः, द्वित्वविवक्षायामुत्पन्नास्तिके वा सती, त्रित्वादिविवक्षायामुत्पन्नास्तिकानि वेति, यत् तत् सदेव विवक्षया नियम्यते सङ्ख्याभेदेन व्यवहारार्थम्। यच्च परेण द्रव्यास्तिकं मातृकापदास्तिकं वाऽभ्युपेतं तदुत्पन्नमनुत्पन्नं वा स्यात्? यदि पूर्वः कल्पः असत्समीहितसिद्धिः, अथोत्तरस्ततोऽसदेव द्रव्यास्तिकादि, कथञ्चिदप्युत्पादनेनायोगादत आह—अनुत्पन्नं वाऽनुत्पन्ने वाऽनुत्पन्नानि **वा सर्वमसत् स्वलक्षणस्योत्पादस्याभावादिति।** एवमुक्तेन प्रकारेण धर्मादि द्रव्यं स्यात् सत् स्यादसत् स्यान्नित्यं स्यादनित्यमिति प्रतिपाद्यत्वेन सूचितम्, अधुना विपञ्च्यते। तत्र द्रव्यार्थनयप्रधानतायां पर्यायनयगुणभावे च प्रथमविकल्पः, प्राधान्यं शब्देन

सदादिभङ्गाः

विवक्षितत्वाच्छब्दाधीनम्, शब्दानुपात्तस्यार्थतो गम्यमानस्याप्रधानता १। पर्यायनयप्रधानतायां द्रव्यनयगुणभावे च द्वितीयः २। अर्पितेऽनुपनीते न वाच्यं सदित्यसदिति वेत्यनेन भाष्यवचनेन तृतीयविकल्पो विवक्ष्यते स्यादवक्तव्यमिति ३। एते त्रयः सकलादेशाः। यदा त्वभिन्नमेकं वस्त्वनेकेन गुणरूपेणोच्यते, गुणिनां च गुणरूपमन्तरेण विशेषप्रतिपत्तेरभावादिहात्मादिरेकोऽर्थः सत्त्वादेरेकस्य गुणस्य रूपेणाभेदोपचारतो मतुब्लोपेन वा निरंशः सकलो व्याप्तो वक्तुमिष्यते, विभागनिमित्तस्य प्रतियोगिनो गुणान्तरस्यासत्त्वादेस्तत्रानाश्रयणात्, तत्र द्रव्यार्थाश्रयं सत्त्वगुणमाश्रित्य तदा स्यात् सन्नित्युच्यते सकलादेशः, गुणद्वयं तु गुणिनो भागवृत्ति भवत्युभयात्मकत्वाद् गुणिनः, न त्वेको गुणो भागवृत्तिरिति। एवं स्यान्नित्य इत्यपि वाच्यम्। तथा पर्यायनयाश्रयमसत्त्वमनित्यत्वं चाङ्गीकृत्य स्यादसत् स्यादनित्य आत्मेति वाच्यम्। युगपद् भावादुभयगुणयोरप्रधानतायां शब्देनाभिधेयतयाऽनुपात्तत्वात् स्यादवक्तव्यः॥ का पुनर्भावना स्याद् सन्निति? किमत्र भाव्यम्? एकं द्रव्यमनन्तपर्यायमतीतानागतानन्तकालसम्बन्ध्यनेकार्थव्यञ्जनपर्यायात्मकतया विश्वरूपम्, तदेवंविधावस्थं वस्तु वर्तमानपर्यायवृत्तमपि येन येन शब्देनोच्यते तेन तेन रूपेण तदभिसम्बद्धम्, द्रव्यस्य पर्यायसचिवत्वात् पर्यायाणां च द्रव्यसहायत्वात्, अतोऽनेकान्तवादसामर्थ्याद् वस्तुनो यदुक्तसूक्तिका, न च व्यवहारविरोधिनी, यथा घट. पटादिरपि भवति स्यात्कारसलाञ्छनशब्दाभिधेयतायामिति जैनेन्द्रो न्याय.। एवं न्यायव्यवस्थायामनन्तपर्याये पुरुषादौ सप्तधा वाचकः शब्दः प्रवर्तते स्यादस्त्येवेत्यादिः, यथा युवत्ववृत्तिः, पुरुषः पुरुषत्वेनास्ति न तु बालवृत्त्या, ततः स्यादस्त्येव न पुनः सर्वात्मनैव पुरुषः द्रव्या-

१ 'द्वित्वादिविवक्षायामुत्पादास्तिके वा सती सन्त्युत्पन्नास्तिकानि वेति' इति ग टी पाठ। २ 'चेति' इति क-पाठ। ३ '०कस्य रूपेण' इति क-पाठ।

धर्मादीनामन्यतमैकविवक्षायां सत् मातृकापदम्, द्वित्वविवक्षायां सती मातृकापदे, त्रित्वादिविवक्षाया सन्ति मातृकापदानीति प्रतिविशिष्टव्यवहारप्रसिद्धिः, अतो धर्मादयः परस्परव्यावृत्तसत्त्व स्वभावार्पणयैव सन्ति, नान्यथा। धर्मास्तिकायस्वलक्षण य(त् त)न्न जातुचिदधर्मास्तिकायलक्षणं भवति, अतो यदस्ति तन्मातृकापद वेत्यादिना विकल्पत्रयेण सङ्गृहीतं धर्मादि पञ्चविधम्, सकलभेदजालप्रसूतिहेतुत्वान्मातृकापद मातृकास्थानीयमुच्यते धर्मादि, नातोऽन्यदस्तीति, अमातृकापद वेत्यादिना तामेव परस्परव्यावृत्तिमभिव्यनक्ति, यदि धर्मादिपञ्चकव्यतिरेकि किञ्चिद् भवेत् ततस्तन्मातृकापद वेत्यादिव्यपदेशो युज्येत, सञ्ज्ञास्वलक्षण्याद्यभावात् तथासत्, तस्मात् धर्म एवाधर्मलक्षणाद् व्यावर्तमानस्तेनाधर्मस्वलक्षणरूपेणासन्नित्युच्यते । एवं शेषेष्वपि भावना विधेया ॥

सर्वसद्गतिविशेषाणा प्रसवहेतुत्वाद् धर्मास्तिकायो मातृकापदम्, स एव च सर्वसत्स्थितिविशेषप्रसवव्यावृत्त्यपेक्षया अमातृकापदम्, एव द्विवचनबहुवचने विभावनीये । तस्मान्न द्रव्यास्तिकादि किञ्चिन्मातृकापदव्यतिरेकि विद्यते, स्वभावासङ्क्रान्त्या तु परस्परापोहभावतः पदार्थव्यवस्थानम्, स चापोहः सल्लक्षणव्यवच्छेदेनैको यथा प्रमाण प्रमेयं च सद्, यन्न प्रमाण न प्रमेय तदसदेव, अपरो धर्म्यन्तरस्य धर्म्यन्तरोत्पन्नवैशिष्ट्येनापोहः, तद्यथा—जीवोऽजीवो न भवत्यश्वो गौर्न भवतीति, तथाऽनपोहश्चेतनाचेतनयोर्द्रव्यादेशात्, परस्परापोहे च द्रव्यादेशात् सर्वेषा धर्मादीनामनपोह इत्येवं सामान्यविशेषानेकधर्मत्वाद् धर्मादयोऽपोहानपोहरूपाः सर्वे मातृकापदास्तिकम्, एव द्रव्यार्थनयाभिप्रायो द्रव्यास्तिकमातृकापदास्तिकाभ्यामाख्यातः । पर्यायार्थनयावसरे त्विदमुच्यते—

• भा०—उत्पन्नास्तिकस्य उत्पन्नं वा उत्पन्ने वा उत्पन्नानि वा सत् । अनुत्पन्नं वाऽनुत्पन्ने वाऽनुत्पन्नानि वाऽसत् ॥

टी०—उत्पन्नास्तिकस्येत्यादि । पर्यायार्थस्य मूलमृजुसूत्रः, स च प्रत्युत्पन्नं वर्तमानक्षणमात्र सर्वमेव धर्मादिद्रव्य प्रतिजानीते, क्षण क्षण प्रत्युत्पन्न पूर्वपूर्वक्षणविलक्षणम्, इदमेव च सतो लक्षणं यदुत्पद्यते प्रतिक्षणम्, उत्पादो हि वस्तुनो लक्षणम्, अनुत्पादाश्च व्योमोत्पलादयो न कथञ्चिल्लक्ष्यन्ते, तत्रात्मना तावत् प्रतिक्षणमपरापरज्ञानदर्शनक्रियाद्युत्पादो लक्षणम्, पुद्गला वर्ण गन्ध रस स्पर्श-शब्द संस्थान तम-श्छायाद्युत्पादलक्षणाः, धर्माधर्माकाशास्तु गन्तृस्थात्रवगाहमानगतिस्थित्यवगाहाकारोत्पादतः प्रतिक्षणमन्ये चान्ये च भवन्तीति, एषां च वर्तमानक्षण एव सत्त्वः, तस्मादेकमभिन्न सकलभेदहेतुर्मातृकापद नाम किञ्चिन्नास्ति व्यवहारनयपुरस्कृतम् । अपि च—व्यवहारोऽपि लौकिकः प्रत्युत्पन्नक्षणसाध्य एव, सतोऽर्थक्रियासामर्थ्यात् सँश्च वर्तमानक्षण , क्रान्तानागतक्षणयोरसत्त्वान्नार्थक्रियासामर्थ्यं सम्भाव्यते,

(पार्श्वटिप्पणी: पर्यायास्तिके उत्पन्ना० ऋजुसूत्र)

१ 'अलोकाकाशेऽपि अगुरुलघुपर्यायाणामनुसमयमुत्पादोऽस्त्येव ।

एवकारस्यार्थ-त्रैविध्यम्

दासः, तत्रायोगोऽसम्बन्धस्तदवच्छेदफल विशेषणमस्त्येव घट इत्यादावस्तिना सह घटस्यायोगो-नास्त्ययोगमात्रं व्यवच्छिद्यते, यथा चैत्रो धनुर्धरः, चैत्रे हि धनुर्धरतायामाशङ्क्यमानाया चैत्रो धनुर्धर एवेत्यत्रधार्यमाणेनान्येभ्यो धनुर्धरता व्यावर्तते, तद्वदिहापि प्रकृतवस्तुनीति, स्यात् त्वेष दोषो यद्यन्ययोगव्यवच्छेदेन विशेषणं क्रियेत, यथा पार्थो धनुर्धरः पार्थे धनुर्धरताया प्रतीताया तादृशी किमन्यत्राप्यस्तीति चिन्ताया पार्थ एव धनुर्धरो नान्य इति प्रतिविशिष्टधनुर्धरताया सहान्यैर्योगो व्यवच्छिद्यत इति। क्वचिदत्यन्तायोगव्यवच्छेदो नीलमेव सरोजमित्यत्र, न सरोजं सकलद्रव्यभाविनीलगुणमात्मसात्करोति, तथा नीलत्वमपि न समस्तसरोजाक्षेपि, अत एवोभयव्यभिचारादुभयविशेषणत्वम्, अत्र च नीलतायाः किलात्यन्तमयोगो व्यवच्छिद्यते, नात्यन्तमयोगः-असम्बन्धः सरोजेन सह नीलतायाः। सर्वत्र चैवकारस्य विवक्षावशात् साक्षादप्रयोगेऽपि व्यवच्छेदार्थप्रतीतिरतो निरन्वयदोषाभावस्तदयोगव्यवच्छेदेन विशेषणादिति। अत्रोच्यते—सर्वमेतद् व्यामोहभावित दुर्बुद्धेरुद्गरतः परप्रयुक्तदूषणानि, यस्मादयोगे व्यवच्छिन्नेऽपि प्रागेतन(?)दोषसम्पातो न निवर्तते, अयोगव्यवच्छेदेन ह्यस्तिना योग इष्यते, स च योगः किं सामान्यरूपेणास्तिना प्रत्याय्यतेऽथ विशेषरूपेण उतोभयरूपेणेति सर्वथा प्राक्तनदोषप्रसङ्गः, व्यवच्छेदोऽप्यस्तित्वसामान्यायोगस्य वाऽस्तित्वविशेषायोगस्य वा उभयायोगस्य वा? यद्यस्तित्वसामान्यायोगव्यवच्छेदः, ततोऽस्तित्वविशेषायोगव्यवच्छेदाभावप्रसङ्गस्तस्मिंश्चाव्यवच्छिन्ने सर्वास्तित्वविशेषस्वभाव आत्मादिः प्रसक्तः, अथास्तित्वविशेषायोगव्यवच्छेद इष्टः, एवं तर्ह्यस्तित्वसामान्ययोगव्यवच्छेदाभावप्रसङ्गः, ततः प्रागेतन

व्यवच्छेदेऽपि स्याद्वाद

दोषव्रातस्तदवस्थः, अथोभयायोगव्यवच्छेदः, तथापि सामान्यविशेषास्तित्वोभयस्वभावः आत्मादिरभ्युपेतः स्यात्, ततश्च निष्फलमवधारणं, सामान्यास्तित्वेन चास्त्यात्मादिर्विशेषास्तित्वेन च, ततश्च स्वगतविशेषास्तित्वेनास्ति परगतविशेषास्तित्वेन नास्ति वस्तु, स्यादस्ति स्यान्नास्तीति सिद्धम्, अनेकान्तरूपमेव समस्तवस्तु व्यवहारास्पदतामानयन्तस्तत्कारिणस्तद्द्वेषिणश्च केचिज्जायन्ते जगत्यकारणाविष्कृतमत्सरप्रसराः खलु दुर्जनाः। यत्राप्यन्ययोगव्यवच्छेदोऽभिप्रेतस्तत्रापि योगविशेषो व्यवच्छिद्यते न योगसामान्यम्, यादृक् पार्थे धनुर्धरता तादृगन्यत्र नास्तीति। अत्यन्तायोगव्यवच्छेदेऽपि अत्यन्तमयोगो नास्ति योग एव सर्वथा, अथवा कदाचिदस्ति कदाचिन्नास्तीत्येवं च विकल्पद्वयेऽपि प्राच्य एव प्रसङ्गो योज्यः॥ प्रकृतमनुस्रियते—सर्वथा सामान्यविशेषरूपत्वात् प्रकारवदस्तित्वमतः सामान्यास्तित्वेनास्ति विशेषास्तित्वेन नास्त्यात्मा स्यादस्ति स्यान्नास्तीति, तथा यदस्ति तन्नियमेन द्रव्यक्षेत्रकालभावरूपेणैवात्मलाभ लभते, यथा—आत्मा जीवद्रव्यतया, क्षेत्रत इह क्षेत्रतया, कालतो वर्तमानकालसम्बन्धितया, भावतो ज्ञानदर्शनोपयोगमनुष्यगतितयेति

१ इति विशिष्ट ' इति क-ख-पाठ ।

र्थेनान्वयिना वर्तमानेन यौवनेन विद्यते, न तु तत्र सम्भविनान्येनापि पर्यायेण बालादिना, यदि पुनरस्त्येवेति नियमेनैवोच्यते तत आमरणकालवृत्तत्वात् पुरुषशब्दपुरुषार्थयोर्नास्तित्वनिरवकाशास्तित्वप्रतिज्ञावशात् यथा पुरुषत्वयौवनाभ्या विद्यते तथा बालपुरुषतयाऽपि स्यादन्याभिश्च वृत्तिभिः सत्सङ्कीर्णवृत्तिर्भवेत्, नियतवृत्तिश्च दृश्यते, न वा बालता पुरुषस्वभाव एव भवतीत्यभ्युपेयम्, ततश्चावस्थाहानेः पुरुषाभावप्रसङ्गः, अतो बालापेक्षया स्यादस्त्येवेति भवति, तथैकान्तवादिनो नास्त्येवात्मेत्यवधारणेनोक्ते यथैवान्वयिना द्रव्यार्थपुरुषतया स नास्ति, एवमुत्पादविनाशप्रवाहरूपपर्यायात्मिकयाऽपि बालादिवृत्त्या न स्यात्, एव चात्मनास्तित्वमस्तित्वनिरवकाश भवेत्,ततश्चान्वयिना नैमित्तिकेन वा रूपेण नास्तित्वमात्मनो वान्ध्येयस्येव सर्वप्रकारमनुपक्रम्, अतस्तद्दोषापाकरणेन स्यान्नास्त्येवेत्युच्यते, स ह्यन्वयिन्या वृत्त्या न (?) विद्यते, न सर्वात्मनैव, यतो वर्तमानपर्याय' स्वात्मना बालादिरूपेणास्त्येव, पर्यायपरम्परायामपि वर्तमानपर्यायेणैवास्ति नातीतानागतपर्यायापेक्षणेनेत्यतः स्यान्नास्त्येवेति । ये त्वस्तित्वनास्तित्वैकान्तवादिनोऽवधारणमिष्टतः प्रयुञ्जतेऽस्त्येवात्मा नास्त्येव चात्मेति, तेषां शब्दशक्तिप्रापितत्वात् सर्वथाऽस्तित्वनास्तित्वप्रसङ्गः । प्रथमविकल्पे तावत् सर्वप्रकारास्तित्वमात्मनः प्रसजति, प्रतिषेधनिरपेक्षत्वादस्तित्वेन स्ववशे व्यवस्थापितत्वादस्तित्वाभावे चात्माभावात्, नास्तित्वस्यापि स्वविषयेऽवधृतत्वात् सति घटे तदप्रसङ्गात्, एकाधिकरणयोश्च सदसतोर्विरोधात् परस्परविषयानाक्रान्तिः, अत' समस्तवस्तुरूपेणास्त्यात्मा नास्तित्वनिरवकाशास्तिशब्दवाच्यत्वादस्तित्वे स्वात्मवत्, अस्तित्वसामान्येन व्याप्तो न त्वस्तिविशेषैः पटादिभिरिति चेत्, यथाऽनित्यमेव कृतकमनित्याभावे तदभावात्, साध्यधर्मसामान्येनेति वचनात्, अनित्यत्वसामान्यमनित्यव्यक्तिश्चेति द्विरूप' साध्यधर्म., साधनधर्मोऽपि हि द्विप्रकारः, तत्तुल्योऽपि हितानामे(?)-त्यादिवचनात्, तथास्व येन रूपेणेत्याद्यभिधानात् सामान्यानित्यतया व्याप्तिर्न विशेषानित्यतया, हन्त भवतैव तर्हि प्रतिपन्नः साध्यधर्मभेदस्तथा चावधारणवैयर्थ्यम्, अनित्यत्वे हि सर्वप्रकारे सत्यवधारणसाफल्य स्यात्, यदा तु विशेषानित्यतया न भवत्यनित्य वस्तु तदा व्यर्थमवधारणम् । स्वगतेनापि विशेषेणानित्य भवत्येवेति चेत्, तन्न, तत्रापि स्वगतेनेति विशेषणसामर्थ्यात् परगतविशेषानित्यत्वाभावः, पुनरप्यफलमेवावधारणम् । न चानवधारणो वाक्यप्रयोग. पण्डितजनमन'प्रीतिहेतु', सर्ववाक्याना सावधारणत्वादिष्टतश्चावधारणप्रकल्पनादवश्यंतयाऽवधारणमभ्युपेयम्, अन्यथा त्वनित्य कृतकमनित्यत्वस्यानवधृतत्वान्नित्यत्वप्रसक्तिरपि ॥ अपरे त्वेवविधप्रसङ्गभीत्या त्रिधाऽवधारणफल वर्णयन्ति अयोगान्ययोगात्यन्तायोगव्यवच्छेदद्वारेण, क्वचिदेवकारप्रयोगादयोगव्यवच्छेदः, क्वचिदन्ययोगनिरासः, क्वचिदत्यन्तायोगव्यु-

---

१ ' मेति तथैकान्त ' इति क-पाठ । २ ' सतो वर्त ' इति ग-पाठः । ३ ' निषेध इति क पाठः । ४ ' धर्मा हि ' इति-क ग पाठ । ५ ' तथात्र ' इति ग-पाठः ।

अर्पितं विशेष्यते, कीदृशेऽर्पिते ? अनुपनीते, कथमनुपनीते ? सामर्थ्यात् क्रमेणाविशेषिते, क्रमेण त्वर्पणे प्राच्यविकल्पावेव स्याताम्, अतोऽवश्यंतया युगपदभिन्ने काले द्वाभ्यां गुणाभ्यामेकस्यैवार्थस्याभिन्नस्य प्रतियोगिभ्यामभेदरूपेणैकेन शब्देनावधारणात्मकाभ्यां वक्तुमिष्टत्वादवाच्यम्, तद्विधस्यार्थस्य शब्दस्य चाभावात्, अयं च विकल्पस्तत्त्वान्यत्वसत्त्वासम्भवात् किलावक्तव्यमेवेत्येवंविधैकान्तव्यावर्तनार्थः स्यादवक्तव्य एवात्मा, अव-

अवक्तव्यत्वम्

क्तव्यशब्देनान्यैश्च षड्भिर्वचनैर्द्रव्यपर्यायविशेषैश्च वक्तव्य एव, अन्यथा सर्वप्रकारावक्तव्यतायामवक्तव्यादिशब्दैरप्यवाच्यत्वादनुपाख्यः स्यात्, अतीतविकल्पद्वयं त्वेकान्तास्तित्वैकान्तनास्तित्वप्रतिपक्षनिराकरणद्वारेण स्यादस्ति स्यान्नास्तीति स्वपरपर्यायान्यतरैकधर्मसम्बन्धार्पणात् कालभेदेनोक्तम्, अधुना युगपद् विरुद्धधर्मद्वयसम्बन्धार्पितस्य च वस्तुरूपस्याभिधानात् कीदृशः शब्दप्रयोगो भवतीति ? उच्यते—न खलु तादृशः शब्दोऽस्ति यस्तादृशीं विवक्षां प्रतिपूरयेत्, यतोऽर्थान्तरवृत्तैः पर्यायैरवर्तमानैरननुभवस्तान् पर्यायान् द्रव्य ब्रवीतीत्येका विवक्षा, अपरा तु विवक्षा निजैः पर्यायैः स्वात्मनि वृत्तैर्वर्तमानमनुभवन् स्वान् पर्यायान् द्रव्यमभिदधातीति, एवमेतयोर्विवक्षयोः परस्परविलक्षणत्वाद् विरुद्धत्वाच्च द्वाभ्यामपि युगपदादेशे पुरुषस्यैकस्यैकत्र द्रव्ये नास्ति सम्भवो वचनविशेषातीतत्वाच्चावक्तव्य वाचकशब्दाभावात्। एतदुक्त भवति—अस्तित्वनास्तित्वयोर्विरुद्धयोरेकत्राधिकरणे काले च सम्भव एव नास्तीत्यतस्तद्विधस्यार्थस्याभावात् तस्य वाचकः शब्दोऽपि नास्त्येवेति १॥ तथा कालाद्यभेदेन वर्तन गुणानां युगपद्भावस्तच्च यौगपद्यमेकान्तवादे नास्ति, यतः कालात्मरूपार्थसम्बन्धोपकारगुणिदेशसंसर्गशब्दद्वारेण गुणाना वस्तुनि वृत्तिः स्यात्, तत्रैकान्तवादे विरुद्धानां गुणानामेकस्मिन् काले न क्वचिदेकत्रात्मनि वृत्तिर्दृष्टा, न जातुचित् प्रविभक्ते सदसत्त्वे स्व एकत्रात्मन्यसंसर्गरूपे येनात्मा तथोच्येत, ताभ्यां विविक्तश्च परस्परगुणानामात्मस्वभावो नान्योन्यात्मनि वर्तते, ततश्च नास्ति युगपदभेदेना-

कालादयो वृत्तिहेतव

भिधानम् २॥ न चैकत्रार्थे विरुद्धाः सदसत्त्वादयो वर्तन्ते, यतोऽस्य-भिन्नैकात्माधारत्वेनाभेदे सति सदसत्त्वे युगपदुच्येयाताम् ३॥ न च सम्बन्धाद् गुणानामभेदः, सम्बन्धस्य भिन्नत्वात्, छत्रदेवदत्तसम्बन्धाद्धि दण्डदेवदत्तसम्बन्धोऽन्यः, सम्बन्धिनोः कारणयोर्भिन्नत्वात्, न तावेकेन सम्बन्धेनाभिन्नावेव, सदसतोरात्मना सह सम्बन्धस्य भिन्नत्वात्, न सम्बन्धकृतं यौगपद्यमस्ति, तदभावाच्च नैकशब्दवाच्यत्वम् ४॥ न चोपकारकृतो गुणानामभेदः, यस्मान्नीलरक्ताद्युपकर्तृगुणाधीन उपकारः, ते च स्वरूपेण भिन्नाः सन्तो नीलनीलतररक्तरक्ततरादिना द्रव्यं रञ्जयन्ति विविक्तोपकारभाजः। एवं सदसत्त्वयोर्भेदात् सत्त्वेनोपरक्तं सत्, असत्त्वोपरक्तमसदिति दूरापेतमुपकारसारूप्यम्, यत-

---

१ 'सत्त्वान्यत्व इति क-पाठ।

२ 'युगपत्तया विवक्षितादन्यै द्रव्यविशेषपर्यायविशेषवाचके शब्दे।

३ 'स्यादस्तीत्यादिरूपैरेतद्वक्तव्यव्यतिरिक्तै। ४ 'मनुभवन्' इति क पाठ।

प्रतिपादिते गम्यत इदं–द्रव्यक्षेत्रकालभावान्तरसम्बन्धितया नास्त्यात्मा। यदि च सर्वद्रव्यतयाऽऽत्मा स्याद्, आत्मैवासौ न भवेत्, द्रव्यत्ववत्, सर्वद्रव्यतया वा,

स्वद्रव्यादिना सत्त्वम् तद्रूपतया च सर्वकालसम्बन्धित्वाद् व्योमवन्मनुष्यभावे वा समस्तनारकादिभावप्रसङ्ग एकान्तवादिनाम्, अतोऽस्य स्वद्रव्यादित्वेनैवास्तित्वमभ्युपेयम्, नान्यद्रव्यादित्वेन ॥ ततश्च स्वैरस्तित्वात् परैश्च नास्तित्वात् स्यादस्ति स्यान्नास्तीति, स्वपरमात्रभावाभावोभयाधीनत्वादात्मास्तित्वस्य, यथैव स्वास्तित्वादस्तीत्युच्यते, तथैव परनास्तित्वान्नास्तीत्यपि वाच्यम्, न च प्रकारान्तरमस्ति किञ्चिदेकान्तवादिनां यदाश्रयणेनावष्टम्भो दृढप्रतिबन्धः स्यादिति नास्तित्वमस्तित्वानपेक्षमत्यन्तशून्यं वस्तु प्रतिपादयेदन्वयाप्रतिलम्भाद् अस्तित्वमपि नास्तित्वानपेक्षं सर्वरूपं वस्तु गमयेत् व्यतिरेकाप्रतिलम्भात्, न च सता सर्वाभावरूपेण सकलभावरूपेण वा भूयते, अतः सर्वदाऽस्तित्वं नास्तित्वसापेक्षं नास्तित्वं चास्तित्वापेक्षमेवात्मलाभमासादयति, एवं चात्मनि नाप्रसक्ता घटादिसत्ता निषि-

अस्तिनास्तिरूपता ध्यते अर्थात् प्रकरणाद् वा, घटादिसत्तानिषेधश्चात्मनो धर्मस्तदधीनत्वादात्मस्वभावस्य, स एव च परेण विशेष्यमाणत्वात् परपर्याय उच्यते, गव्यनश्वत्ववत्, आत्मना विशेष्यमाणत्वादात्मपर्यायः, स्वपरविशेषणायत्तं हि वस्तुस्वरूपप्रकाशनम्, अनेकान्तवादे च स्यादस्त्यात्मेत्यादिभिः सप्तभिर्वाक्यैरभिधीयते वस्तु प्रत्येकक्रियापदप्रयोगेणार्थपरिसमाप्तेः, आत्मेति द्रव्यवाची विशेष्यत्वात्, अस्तीति गुणाभिधायी विशेषणत्वात्, शब्दशक्तिस्वाभाव्याच्च तथा प्रतीतेः, बुद्ध्यारूढस्योपचरितसत्ताकस्य मुख्यसत्त्वविशेषणत्वेनोपात्तस्य धर्मिण उपादानादसत्त्वे इव, स्याच्छब्दस्तु द्रव्यधर्मलिङ्गसङ्ख्याभेदवियुक्तत्वादसंप्रकृतिर्विध्यादिविषयस(म ?)द्विभक्तिप्रथमपुरुषैकवचनान्तप्रतिरूपको निपातो विधिविचारणास्तित्वविवादानेकान्तसंशयाद्यर्थवृत्तिः, तस्य चानेकान्तावद्योतनमेवार्थो विवक्षितः, केवलस्य च सामान्यविषयत्वावद्योतकत्वाद् विवक्षितार्थप्रतिपादनाय द्रव्यधर्मविशेषोपादानं, तन्नान्तरीयकत्वात्, निपातानां चापरिमितत्वादनेकान्तद्योतकतया विवक्षितत्वादिति, स्याच्छब्देनानेकान्ताभिधानादाक्षेपेऽपि सप्तभङ्ग्याः पुनर्भेदेनोपादानं विशिष्टार्थप्रतिपादनाय, यथा वृक्षशब्देन सामान्यविषयेणाक्षेपेऽपि धवादीनां विशेषप्रतिपिपादयिषया धवादिशब्दोपादानम्, एवमेतदपि दृश्यम्, भेदाप्रतिपत्तेर्विवक्षितभेदप्रतिपादनाय भेदपरिमाणनियमाभिधानाय वा सामान्यलक्षणप्रपञ्चव्याख्यानाय वा सङ्क्षेपव्यासाभिधानम्, तत्रास्तित्वनास्तित्वैकान्तनिवारणाय प्रथमद्वितीयौ,एकान्तरूपस्यार्थस्यावस्तुत्वादिति। तृतीयविकल्पाभिधित्सया भाष्यकृदाह–

भा०—अर्पितेऽनुपनीते न वाच्यं सदित्यसदिति वा।

टी०—युगपदात्मन्यस्तित्वनास्तित्वधर्माभ्यामर्पिते विवक्षिते क्रमेण चानुपनीते क्रमेणाभिधातुमविवक्षिते वाच्यं न जातुचित् सदात्मतत्त्वमसदात्मतत्त्वमिति वा। वाशब्दो विकल्पार्थः,

---

१ 'कादिप्रसङ्ग' इति क-पाठः।

अर्पितं विशेष्यते, कीदृशेऽर्पिते ? अनुपनीते, कथमनुपनीते ? सामर्थ्यात् क्रमेणाविशेषिते, क्रमेण त्वर्पणे प्राच्यविकल्पावेव स्याताम्, अतोऽनर्थतया युगपदभिन्ने काले द्वाभ्या गुणाभ्यामेकस्यैवार्थस्याभिन्नस्य प्रतियोगिभ्यामभेदरूपेणैकेन शब्देनावधारणात्मकाभ्या वक्तुमिष्टत्वादवाच्यम्, तद्विधस्यार्थस्य शब्दस्य चाभावात्, अयं च विकल्पस्तत्त्वान्यत्वसत्त्वासम्भवात् किलावक्तव्यमेवेत्येवविधैकान्तव्यावर्तनार्थः स्यादवक्तव्य एवात्मा, अवक्तव्यशब्देनान्यैश्च पड्भिर्वचनैर्द्रव्यपर्यायविशेषैश्च वक्तव्य एव, अन्यथा सर्वप्रकारावक्तव्यतायामवक्तव्यादिशब्दैरप्यवाच्यत्वादनुपाख्यः स्यात्,

अवक्तव्यत्वम्

अतीतविकल्पद्वय त्वेकान्तास्तित्वैकान्तनास्तित्वप्रतिपक्षनिराकरणद्वारेण स्यादस्ति स्यान्नास्तीति स्वपरपर्यायान्यतरैकधर्मसम्बन्धार्पणात् कालभेदेनोक्तम्, अधुना युगपद् विरुद्धधर्मद्वयसम्बन्धार्पितस्य च वस्तुरूपस्याभिधानात् कीदृशः शब्दप्रयोगो भवतीति ? उच्यते—न खलु तादृशः शब्दोऽस्ति यस्तादृशीं विवक्षा प्रतिपूरयेत्, यतोऽर्थान्तरवृत्तैः पर्यायैरवर्तमानमननुभवंस्तान् पर्यायान् द्रव्य ब्रवीतीत्येका विवक्षा, अपरा तु विवक्षा निजैः पर्यायैः स्वात्मनि वृत्तैर्वर्तमानमनुभवन् स्वान् पर्यायान् द्रव्यमभिदधातीति, एवमेतयोर्विवक्षयोः परस्परविलक्षणत्वाद् विरुद्धत्वाच्च द्वाभ्यामपि युगपदादेशे पुरुषस्यैकस्यैकत्र द्रव्ये नास्ति सम्भवो वचनविशेपातीतत्वाच्चावक्तव्य वाचकशब्दाभावात् । एतदुक्त भवति—अस्तित्वनास्तित्वयोर्विरुद्धयोरेकत्राधिकरणे काले च सम्भव एव नास्तीत्यतस्तद्विधस्यार्थस्याभावात् तस्य वाचकः शब्दोऽपि नास्त्येवेति १ ॥ तथा कालाद्यभेदेन वर्तन गुणानां युगपद्भावस्तच्च यौगपद्यमेकान्तवादे नास्ति, यतः कालात्मरूपार्थसम्बन्धोपकारगुणिदेशससर्गशब्दद्वारेण गुणाना वस्तुनि वृत्तिः स्यात्, तत्रैकान्तवादे विरुद्धानां गुणानामेकस्मिन् काले न क्वचिदेकत्रात्मनि वृत्तिर्दृष्टा, न जातुचित् प्रविभक्ते सदसत्त्वे स्त एकत्रात्मन्यससर्गरूपे येनात्मा तथोच्येत, ताभ्यां विविक्तश्च परस्परगुणानामात्मस्वभावो नान्योन्यात्मनि वर्तते, ततश्च नास्ति युगपदभेदेनाभिधानम् २ ॥ न चैकत्रार्थे विरुद्धाः सदसत्त्वादयो वर्तन्ते, यतोऽह्यभिन्नैकात्माधारत्वेनाभेदे सति सदसत्त्वे युगपदुच्येयाताम् ३ ॥ न च

कालादयो वृत्तिहेतव

सम्बन्धाद् गुणानामभेदः, सम्बन्धस्य भिन्नत्वात्, छत्रदेवदत्तसम्बन्धाद्धि दण्डदेवदत्तसम्बन्धोऽन्यः, सम्बधिनोः कारणयोर्भिन्नत्वात्, न तावेकेन सम्बन्धेनाभिन्नावेव, सदसतोरात्मना सह सम्बन्धस्य भिन्नत्वात्, न सम्बन्धकृत यौगपद्यमस्ति, तदभावाच्च नैकशब्दवाच्यत्वम् ४ ॥ न चोपकारकृतो गुणानामभेदः, यस्मान्नीलरक्ताद्युपकर्तृगुणाधीन उपकारः, ते च स्वरूपेण भिन्नाः सन्तो नीलनीलतररक्तरक्ततरादिना द्रव्यं रञ्जयन्ति विविक्तोपकारभाजः । एव सदसत्त्वयोर्भेदात् सत्त्वेनोपरोक्त सत्, असत्त्वोपरक्तमसदिति दूरापेतमुपकारसारूप्यम्, यत-

१ सत्वान्यत्व इति क-पाठ ।

२ 'युगपत्तया विवक्षितादन्यै द्रव्यविशेषपर्यायविशेषवाचकै शब्दै ।

३ 'स्यादस्तीत्यादिरूपैरेतद्वक्तव्यव्यतिरिक्तै । ४ 'मनुभवन्' इति क पाठ ।

स्तदभेदेन शब्दो वाचकः स्यादिति ५ ॥ नाप्येकदेशे गुणिन आत्मन उपकारः समस्ति, येनैकदेशोपकारेण सहभावो भवेत्, गुणगुणिनोरुपकारकोपकार्यत्वे नीलादिगुणः स्वक उपकारकः समस्तश्च घटादिरुपकार्यः, न चैकदेशे गुणो गुणी वा, यतो देशसहभावात् कश्चित् शब्दो वाचकः कल्प्येत ६ ॥ न चैकान्तनादिना सदसत्त्वयोः संसृष्टमनेकान्तात्मकं रूपमस्ति, अवधृतैकान्तरूपत्वात्, यथैव हि शबलरूपव्यतिरिक्तौ शुक्लकृष्णावसंसृष्टौ नैकस्मिन्नर्थे वर्तितु समर्थौ, एवं सदसत्त्वाभ्यां संसर्गाभावान्न युगपदभिधानमस्ति, नाप्येकशब्दः शुद्धः समासजो वाक्यात्मको वाऽस्ति गुणद्वयस्य सहवाचकः, क्रमेण सदसच्छब्दयोः प्रयोगे यद्यसच्छब्दः सदसत्त्वे यौगपद्येन ब्रवीति, एव तर्हि स्वार्थवत् सत्त्वमप्यसत् कुर्यात्, तथैव सच्छब्दोऽपि स्वार्थवदसदपि सत् कुर्यात्, विशेषशब्दत्वाच्च सदित्युक्ते नासदभिधीयते, न चासदित्युक्ते सदित्युक्त भवति, अतो युगपद्वाचक एकशब्दः । अथ युगपत् सदसच्छब्दौ गुणद्वयस्य

युगपदवाच्यता

वाचकाविष्येते, ततः समासवाक्यमाख्यातादिपदसमुदायवाक्य वा भवेत् तत्र च समासवाक्य न वाचकम्, द्वन्द्वस्तावदुभयपदार्थप्रधानः प्लक्षन्यग्रोधवद्, अस्त्यादिभिः क्रियाभिस्तुल्ययोगित्वात्, क्रियाश्रयत्वाच्च द्रव्यस्य प्राधान्यं न गुणत्वम्, यश्च गुणक्रियाशब्दाना द्वन्द्वो रूपरसादीनामुत्क्षेपणावक्षेपणादीनां च, तत्रापि गुणाः शब्दशक्तिस्वाभाव्याद् द्रव्यरूपा एवोच्यन्तेऽस्त्यादिक्रियायोगित्वात्, अन्यथा द्वन्द्वाभावात् । अत्र चात्मा विशेष्यद्रव्य सदसतोर्गुणवचनत्वमतो गुणस्य गुण्यभेदोपचारेणाभिधानम्, सदात्माऽसदात्मेत्यतो न द्वन्द्वः ॥ ननु च द्रव्येऽपि स्याद्वादोऽस्ति, न गुणविषय एव, यथा स्याद् घटः स्यादघट इति, अत्रापि हि द्रव्यं गुणरूपोपपन्नमेवोच्यते[3], शब्दशक्तिस्वाभाव्याद् विशेषणविशेष्यभावापत्तेर्द्रव्यस्य विशेष्यत्वात्, स्याद् घट इदं वस्त्विति वाक्य च वृत्तेरभिन्नार्थं केवल विभक्तिश्रवणाद् रूपेण भिद्यते, अतो वाक्येनापि युगपत् प्रयोगासम्भवः । समानाधिकरणसमासवाक्यमपि न सम्भवति, तत्र हि द्रव्यगुणयोः सामान्यविशेषभावे सति द्रव्यशब्दताया सामानाधिकरण्य नीलोत्पलादिवत्, अत्र च सदसतोर्गुणत्वात् परस्पर भेदे सति न सामानाधिकरण्यमद्रव्यशब्दत्वात् सामान्यविशेषरूपेणास्थितत्वाच्चास्तिविशेषणविशेष्यसमानाधिकरणसमास' कर्मधारयश्चार्थयोरिष्यते, न चान्यत् प्रतिपदविहित समासलक्षणमस्ति, तस्मात् समासाभावाद् युगपत् प्रयोगाभावस्तद्वाक्येऽपि सामर्थ्याभावाद् वृत्त्यनुरोधिवाक्यत्वाच्चातो न कर्मधारय । नाप्याख्यातादिपदसमुदायो वाक्य सच्चासच्चात्मेति, भवत्यादिक्रियासम्बन्धात्, तत्र सामान्यशब्दो युगपदनेकमर्थमभिदध्यात् न चाभिदधीत, "अभिहितानां सामान्यशब्देन विशेषाणा नियमार्था पुन' श्रुतिः" इति न्यायात्, न वा ब्रूयादनेकमर्थमभिधानोपायासम्भवात्, "तन्मात्राकाङ्क्षणाद् भेद' स्वसामान्येन चोज्झित." इति न्यायात्, सामान्यशब्देष्वेव न विशेषशब्देषु वनखदिरादिषु, विशेषशब्दास्तु वाक्ये प्रयुज्यमाना केवलः

१ 'त्वसदित्युक्ते' इति क पाठ । २ 'अथवा' इति क पाठ. । ३ 'रूपापन्न' इति क पाठ. ।

स्वार्थमेव ब्रुवते सश्चासश्चेति, न त्वनेकमर्थं स्वार्थमात्राभिधानान्न सहगुणद्वयाभिधायिता ॥ ननु च वाक्ये द्वयोरपि शब्दयोरेकतया युगपद्भावः, तन्न, पदेभ्यो वाक्यशब्दस्य शब्दान्तरत्वात्, एक एव हि शब्द इष्यते वाक्यम्, तस्य चार्थान्तरेणैकेनैव प्रतिभारूपेण भाव्यम्, अतोऽत्रापि गुणद्वयवचनस्य युगपच्छब्दद्वयस्यासम्भव इति। एवमुक्ताद् कालादियुगपद्भावासम्भवात् समासवाक्यलौकिकवाक्ये युगपच्छब्दयोर्द्वयोरर्थयोश्च वृत्त्यसम्भवाद् युगपद्विवक्षायामवाच्य इत्येव सर्वैकान्तानवक्तव्यप्रतिषेधद्वारेण भाष्यकृता तृतीयविकल्पप्रणयनमकारि प्रेक्षापूर्वकारिणा कथञ्चिदवक्तव्यः, कथञ्चिद् वक्तव्योऽनक्तव्यादिशब्दैरात्मेति निरूपितम्। एतदेव च विकल्पत्रयमधुना भाष्यकारः स्फुटतर भाष्येण दर्शयति। स्याद्वादो हि धर्मसमाश्रयः स्वसिद्धमत्तावत्स्य च धर्मिणः सत्त्वासत्त्वनित्यत्वानित्यत्वाद्यनेकविरुद्धाविरुद्धधर्मकदम्बकाभ्युपगमे सति सप्तभङ्गीसम्भवः, तत्र सङ्ग्रहव्यवहाराभिप्रायात् त्रयः सकलादेशाः, चत्वारस्तु विकलादेशाः समवसेयाः ऋजुसूत्रशब्दसमभिरूढैवंभूतनयाभिप्रायेण। तत्रातीतविकल्पत्रयस्वरूपभावनायेदमुच्यते—

प्रथमो विकल्पः

भा०—पर्यायास्तिकस्य सद्भावपर्याये वा, सद्भावपर्याययोर्वा, सद्भावपर्यायेषु वा आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वा सत्।

टी०—पर्यायास्तिकस्येत्यादि। पर्यायास्तिकग्रहणं धर्मविषयस्याद्वादप्रतिपत्त्यर्थम्, धर्मास्त्वरूपित्वसत्त्वमूर्तत्वादिरूपा धर्मिणः परिणामिनो नात्यन्तव्यतिरिक्ता इत्यतस्तत्प्रणाडिकया धर्मिविषयत्वमपि द्रव्यपर्याययोः ससृष्टत्वादेव (देवमेव), अत्र च द्रव्यास्तिकपर्यायास्तिकनयद्वयमात्रवस्तुसमाश्रयः सिद्ध्यति स्याद्वादः, अन्यथा पर्यायनयाश्रय एव विकल्पसप्तकेन सकलवस्तुव्यापी स्यात् स्याद्वादः, सतो भवनं भावस्तद्भावलक्षणः परिणामः, स चानेकरूपः क्रमयुगपद्भावित्वात्, सुरमनुष्यादेर्ज्ञानदर्शनादेश्चात्मनः सद्भावपर्यायत्वं, शेषधर्मादिद्रव्यवृत्ताः पुनरसद्भावपर्यायाः, वर्तमानकालावधिकाः पर्यायाः सद्भावलक्षणाः, ततोऽन्येऽतीतानागतवर्तमानकालविशिष्टास्त्वसद्भावपर्याया[1], तावत् परिणामपर्यायकलापाश्चात्मादयः पदार्थाः, स्वपरपर्यायानन्तस्वभावमेकं द्रव्यं सत्तारूपेण विवक्षितम्, चेतनाचेतनाद्वं महासामान्यमुत्सर्गः, पर्याया[2] शक्तयोऽनन्ताः, तत्र स्वपर्यायान्वयवत् परपर्यायव्यतिरेकोऽपि वस्तुस्वभावानुगतेरङ्गम्, तन्निवृत्त्यग्रहणे वस्तुसद्भावाग्रहणाद् विनिवृत्तिद्वारेणैवासद्भावपर्यायोपयोग[2], न निवृत्तिरभावः, स एव हि तथा स्वभावो विनिवृत्ताशेषान्यविशेषलक्षणो निवृत्तिशब्दवाच्यः, तदेवमन्वयव्यतिरेकयोर्विधिप्रतिषेधविषययोरनियमातिप्रसङ्गपरिहारार्थं चिदत्तरकिंवृत्तावद्योत्यविषय स्याच्छब्दाग्रेसरमपि शब्दसहितं तथाविधान्यतमशब्दविशिष्टं वा धर्मधर्मिनिर्देशवाक्यं प्रयुज्यतेऽन्तर्भूतैवकारं गुणप्रधानभावव्यक्ति-

धर्मधर्मिस्याद्वाद

१ 'नेकविरुद्धधर्म' इति क पाठ। २ ' रूपे विव० ' इति ग पाठ।

स्तदभेदेन शब्दो वाचकः स्यादिति ५ ॥ नाप्येकदेशे गुणिन आत्मन उपकारः समस्ति, येनैकदेशोपकारेण सहभावो भवेत्, गुणगुणिनोरुपकारकोपकार्यत्वे नीलादिगुणः स्वक उपकारकः समस्तश्च घटादिरूपकार्यः, न चैकदेशे गुणो गुणी वा, यतो देशसहभावात् कश्चित् शब्दो वाचकः कल्प्येत ६ ॥ न चैकान्तवादिनां सदसत्त्वयोः संसृष्टमनेकान्तात्मकं रूपमस्ति, अवधृतैकान्तरूपत्वात्, यथैव हि शबलरूपव्यतिरिक्तौ शुक्लकृष्णावसंसृष्टौ नैकस्मिन्नर्थे वर्तितुं समर्थौ, एवं सदसत्त्वाभ्यां संसर्गाभावान्न युगपदभिधानमस्ति, नाप्येकशब्दः शुद्धः समासजो वाक्यात्मको वाऽस्ति गुणद्वयस्य सहवाचकः, क्रमेण सदसच्छब्दयोः प्रयोगे यद्यसच्छब्दः सदसत्त्वे यौगपद्येन ब्रवीति, एवं तर्हि स्वार्थवत् सत्त्वमप्यसत् कुर्यात्, तथैव सच्छब्दोऽपि स्वार्थवदसदपि सत् कुर्यात्, विशेषशब्दत्वाच्च सदित्युक्ते नासदभिधीयते, न चासदित्युक्ते सदित्युक्तं भवति, अतो युगपदवाचक एकशब्दः । अथ युगपत् सदसच्छब्दौ गुणद्वयस्य वाचकाविष्येते, ततः समासवाक्यमाख्यातादिपदसमुदायवाक्यं वा भवेत् तत्र च समासवाक्यं न वाचकम्, द्वन्द्वस्तावदुभयपदार्थप्रधानः प्लक्षन्यग्रोधवद्, अस्त्यादिभिः क्रियाभिस्तुल्ययोगित्वात्, क्रियाश्रयत्वाच्च द्रव्यस्य प्राधान्यं न गुणत्वम्, यश्च गुणक्रियाशब्दानां द्वन्द्वो रूपरसादीनामुत्क्षेपणावक्षेपणादीनां च, तत्रापि गुणाः शब्दशक्तिस्वाभाव्याद् द्रव्यरूपा एवोच्यन्तेऽस्त्यादिक्रियायोगित्वात्, अन्यथा द्वन्द्वाभावात् । अत्र चात्मा विशेष्यद्रव्यं सदसतोर्गुणवचनत्वमतो गुणस्य गुण्यभेदोपचारेणाभिधानम्, सदात्माऽसन्नात्मेत्यतो न द्वन्द्वः ॥ ननु च द्रव्येऽपि स्याद्वादोऽस्ति, न गुणविषय एव, यथा स्याद् घटः स्यादघट इति, अत्रापि हि द्रव्यं गुणरूपोपपन्नमेवोच्यते, शब्दशक्तिस्वाभाव्याद् विशेषणविशेष्यभावापत्तेर्द्रव्यस्य विशेष्यत्वात्, स्याद् घट इदं वस्त्विति वाक्यं च द्वयैरभिन्नार्थं केवलं विभक्तिश्रवणाद् रूपेण भिद्यते, अतो वाक्येनापि युगपत् प्रयोगासम्भवः । समानाधिकरणसमासवाक्यमपि न सम्भवति, तत्र हि द्रव्यगुणयोः सामान्यविशेषभावे सति द्रव्यशब्दताया सामानाधिकरण्यं नीलोत्पलादिवत्, अत्र च सदसतोर्गुणत्वात् परस्परं भेदे सति न सामानाधिकरण्यमद्रव्यशब्दत्वात् सामान्यविशेषरूपेणास्थितत्वान्नास्तिविशेषणविशेष्यसमानाधिकरणसमासः कर्मधारयश्चार्थयोरिष्यते, न चान्यत् प्रतिपदविहितं समासलक्षणमस्ति, तस्मात् समासाभावाद् युगपत् प्रयोगाभावस्तद्वाक्येऽपि सामर्थ्याभावाद् वृत्त्यनुरोधिवाक्यत्वाच्चातो न कर्मधारयः । नाप्याख्यातादिपदसमुदायो वाक्यं सच्चासच्चात्मेति, भवत्यादिक्रियासम्बन्धात्, तत्र सामान्यशब्दो युगपदनेकमर्थमभिदध्यात् न चाभिदधीत, " अभिहितार्थं सामान्यशब्देन विशेषाणां नियमार्था पुनः श्रुतिः " इति न्यायात्, न वा ब्रूयादनेकमर्थमभिधानोपायासम्भवात्, "तन्मात्राकाङ्क्षणाद् भेदः स्वसामान्येन चोज्झितः " इति न्यायात्, सामान्यशब्देष्वेव न विशेषशब्देषु वनखदिरादिषु, विशेषशब्दास्तु वाक्ये प्रयुज्यमानाः केवलः

युगपदवाच्यता

---

१ ' त्वसदित्युक्ते ' इति क पाठः । २ ' अथवा ' इति क पाठः । ३ ' रूपापन्न ' इति क पाठः ।

इदानीमवक्तव्यताविभावनायाह—

तृतीयो विकल्प

**भा०—तदुभयपर्याये वा, तदुभयपर्याययोर्वा, तदुभयपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वा, न वाच्यं सदसदिति वा ।**

**टी०—तदुभयपर्याये** वेत्यादि । तदित्यतिक्रान्तद्वयपरामर्शः, सद्भावासद्भावपर्यायद्वयसम्परिग्रहार्थः, उभयश्चासौ पर्यायश्च उभयपर्यायोऽस्तित्वनास्तित्वलक्षणः स चासावुभयपर्यायश्च तदुभयपर्यायस्तदुभयपर्यायनिमित्तस्तद्विषयो वाऽप्यादेशस्तेनार्पितमात्मतत्त्वमस्तिनास्तिरूपेण युगपद्विवक्षायामुक्तप्रकारभावनया न शक्य वक्तुमित्यवाच्यम्, ताभ्यामुभयपर्यायाभ्या**मादिष्टं** युगपदात्मरूप **द्रव्यं** वेत्यादि विकल्प्यते, **न वाच्यं सदित्यसदिति वा** सद् द्रव्यमसद् वा द्रव्य न वक्तव्यम्, क्रमेण त्वादेशे भवत्येतदेवम्, सहभावार्पणायां तु न सच्छब्दवाच्य नासच्छब्दाभिधेयम्, एकस्मिन् काले तादृग्विधवाचकशब्दाभावात् ॥ ननु च तदुभयपर्याये वेत्येकवचनमनुपपन्नम्, एकपर्यायविवक्षायामवक्तव्याभावात् । अत्रोच्यते—उभयग्रहणाद् द्वयमत्र गृह्यते । एव तर्हि तदुभयपर्याययोर्वेत्यस्मादविशेषः , नैतदेवम् , यतस्तदुभयपर्याये विशेषविवक्षयाऽस्तित्व हि स्वपर्यायविषय परपर्यायविषय चेत्युभयपर्यायस्तत् तु स्वपर्यायेणावच्छिद्यमानमिहास्तीति गृह्यते, तदेव च परपर्यायेणावच्छिद्यमानमात्मनि नास्तीति ग्राह्यमिदानीमुभयपर्यायो युगपदर्पणाया भवत्यवक्तव्यः, इतरत्र तु प्रधानभेदव्याख्याया द्विवचनादिनिर्देशः समीचीनः, जातिविवक्षाया वा जातेरेकत्वादेकवचनसिद्धिरिति ॥

एवमेते त्रयः सकलादेशा भाष्येणैव विभाविताः सङ्ग्रहव्यवहारानुसारिण आत्मद्रव्ये, सम्प्रति विकलादेशाश्चत्वारः पर्यायनयाश्रया वक्तव्यास्तत्प्रतिपादनार्थमाह भाष्यकारः—

**भा०—देशादेशेन विकल्पयितव्यमिति ।**

**टी०**—इतिकरणो विकल्पेयत्ताप्रतिपादनार्थः । पर्यायास्तिकमिति नपुसकलिङ्गप्रक्रान्तेर्विकल्पयितव्यमित्याह, किं[1] पुनः कारण भाष्यकृता सकलादेशत्रयवदितरेऽपि चत्वारो विकलादेशा भाष्येण नोक्ता इति ? । अयमभिप्रायो भाष्यकारस्य लक्ष्यते—सकलादेशसयोगाच्चतुर्णां निष्पत्तिरिति सुज्ञानाः, तत्राद्यद्वितीयविकल्पसयोगे तुर्यविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चेति । प्रथमतृतीयविकल्पसयोगे पञ्चमविकल्पनिष्पत्तिः—स्यादस्ति चावक्तव्यश्चेति । द्वितीयतृतीयविकल्पसयोगे षष्ठविकल्पनिष्पत्तिः—स्यान्नास्ति चाक्तव्यश्चेति । प्रथमद्वितीयतृतीयविकल्पसयोगे सप्तमविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चावक्तव्यश्चेति । तत्राद्येषु त्रिषु विकल्पेषु सकलमेव द्रव्यमादिश्यते, चतुर्थादिषु पुनर्विकल्पीकृत[2] खण्डश आदिश्यते । तदाह—**देशादेशे**नेत्यादि ।

पर्यायादेशविकल्पा

---

१ ' किं कारण पुनर्भाष्यकृता ' इति क–ख पाठ । २ ' विकलीकृत ' इति क–ख-पाठः ।

प्रकृत्यर्थं प्रयुक्तान्यतरैवकार वा परप्रतिपन्नैकान्तधर्मविशिष्टं वस्तु कथञ्चित् नियमकारिधर्मप्रत्यनीकपर्यायधर्मसम्बन्धीति स्यात् सत् स्यादनित्यनित्यादिधर्मात्मकमित्थ धर्म्यपीति वा स्याद्वादिभिः प्रतिज्ञायते, सुलभहेतुदृष्टान्तत्वात्, अतो द्रव्यास्तिकनयार्पणात् सोऽय धर्म्यभेदेनैव व्यपदेशः प्रत्यभिज्ञाप्रधानत्वात्, पर्यायार्थिकनिर्देशादस्येदमिति भेदभाक्त्वम्, एकवचनादिप्रदर्शन चैकस्यैव सत्त्वस्यासत्त्वस्य वा भजनाप्रभावितमनेकत्वमिति प्रतिपादनार्थम्, तत्र सद्भावपर्यायनिमित्तेनादेशेनार्पितमात्मरूपद्रव्यमित्येव सद्द्रव्यत्वमेव हि **सद्भावपर्यायः**, तद्धि द्रवति पर्यायान् द्रूयते वा तैर्द्रव्यमनेनाकारेणार्पित स्यादस्तीत्युच्यते, तस्य द्रव्यत्वादेः पर्यायस्यात्मपरिणामिकारणप्रभावितत्वात् ताद्रूप्याच्च, तच्चास्तित्व शेषपड्विकल्पापेक्षमेव सञ्ज्ञतिमनुभवति, सद्भावपर्यायद्वयनिमित्तादेव ज्ञानदर्शनोपयोगद्वयकारणक आदेशो द्रव्यम्, वक्ष्यत्युपरि–**द्रव्याश्रया निर्गुणा गुणाः** (अ०५,सू०४०) इति । तथा गणतिथसद्भावपर्यायकारणो वाऽयमादेशश्चैतन्यज्ञानदर्शनोपयोगाश्रयो द्रव्यमिति, एव द्वे द्रव्ये बहूनि वाऽप्युक्तेन प्रकारेणार्पितानि सद्भावपर्यायापेक्षया सद्व्यपदेशभाञ्जि भवन्ति, अथवैकस्मिन् सद्भावपर्यायविषयेऽर्पितमादिष्ट **द्रव्य वा द्रव्ये वा द्रव्याणि वा सत्** तथा द्वयोर्बहुषु विभाव्यम्, अनिशिष्टस्य वा द्रव्यपदार्थस्यैकत्वद्वित्वबहुत्वपर्यायाः, तथा च तदर्प्यमाणं स्यादस्त्येकत्वेनार्पितमेकसङ्ख्याविशेषरूपतयैवास्ति न द्वित्वबहुत्वाकारेण, अनेकधर्मिणो हि वस्तुनः कदाचित् किञ्चिद् विवक्ष्यते, युगपद्भूरिवक्तृविवक्षायामप्येकत्वादयो यौगपद्येनार्पणावशादुपलभ्यन्ते, सकलपर्यायशक्तिसङ्गतेः परिणामिनः, एकपुरुषाधारमातुलभ्रातृभागिनेयादिशक्तिवत्, एकेन वक्त्रा विवक्षिते प्रयोजनवशादेकत्वद्वित्वादि च सम्भवदप्युपेक्षित प्रयोजनाभावात्, अतस्तस्य तेनैव विवक्षिताकारेण कार्यसिद्धेः स्यादस्त्यात्मेत्युच्यते, न सर्वपर्यायार्पणया तदा

सद्भावासद्भावापेक्षया द्रव्यस्यैकत्वादिविचारः

तदस्ति तस्य वक्तुरिति प्रथमविकल्पभावना ॥

द्वितीयो विकल्प

**भा०—असद्भावपर्याये वा, असद्भावपर्याययोर्वा, असद्भावपर्यायेषु वा, आदिष्ट द्रव्य वा, द्रव्ये वा, द्रव्याणि वाऽसत् ।**

**टी०—असद्भावपर्याये** वेत्यादिना द्वितीयविकल्प भावयति । आत्मनो ज्ञानदर्शनादिव्यतिरिक्ता गतिस्थित्यवगाहोपकारस्पर्शादयोऽसद्भावपर्याया वर्तमानजन्मनो वाऽतीतानागतास्तज्जन्मनि वाऽतिक्रान्तागामिन सर्वेऽप्यसद्भावपर्याया. तदर्पणया स्यान्नास्त्येवात्मेति, न सर्वथा नास्तित्वप्रतिपत्तिः, यदाऽऽत्मा गत्युपकारकपर्यायेणार्पितस्तदाऽऽत्मद्रव्यमसत्, तत्स्वभावकत्वेन तस्याद्रवणात्, सद्भावपर्यायप्रभावित वा द्रव्य स्वपरिणामिप्रभाविता वा पर्यायास्तत्र चैकमपि नास्तीत्यतोऽसदित्युच्यते, परपर्यायार्पणया नास्ति तदित्यर्थः । शेष पूर्ववद् विभाव्यम् ॥

---

१ 'तर्दभाव' इति क-पु-पाठ ।

इदानीमवक्तव्यताविभावनायाह—

तृतीयो विकल्प

भा०—तदुभयपर्याये वा, तदुभयपर्याययोर्वा, तदुभयपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वा, न वाच्यं सदसदिति वा।

टी०—तदुभयपर्याये वेत्यादि। तदित्यतिक्रान्तद्वयपरामर्शः, सद्भावासद्भावपर्यायद्वयसम्परिग्रहार्थः, उभयश्चासौ पर्यायश्च उभयपर्यायोऽस्तित्वनास्तित्वलक्षणः स चासावुभयपर्यायश्च तदुभयपर्यायस्तदुभयपर्यायनिमित्तस्तद्विषयो वाऽप्यादेशस्तेनार्पितमात्मतत्त्वमस्तिनास्तिरूपेण युगपद्विवक्षायामुक्तप्रकारभावनया न शक्य वक्तुमित्यवाच्यम्, ताभ्यामुभयपर्यायाभ्यामादिष्ट युगपदात्मरूप द्रव्यं वेत्यादि विकल्प्यते, न वाच्य सदित्यसदिति वा सद् द्रव्यमसद् वा द्रव्य न वक्तव्यम्, क्रमेण त्वादेशे भवत्येतदेवम्, सहभावार्पणाया तु न सच्छब्दवाच्य नासच्छब्दाभिधेयम्, एकस्मिन् काले तादृग्विधवाचकशब्दाभावात्॥ ननु च तदुभयपर्याये वेत्येकवचनमनुपपन्नम्, एकपर्यायविवक्षायामवक्तव्याभावात्। अत्रोच्यते—उभयग्रहणाद् द्वयमत्र गृह्यते। एव तर्हि तदुभयपर्याययोर्वेत्यसाद्विशेषः, नैतदेवम्, यतस्तदुभयपर्याये विशेषविवक्षयाऽस्तित्व हि स्वपर्यायविषय परपर्यायविषय चेत्युभयपर्यायस्तत् तु स्वपर्यायेणावच्छिद्यमानमिहास्तीति गृह्यते, तदेव च परपर्यायेणावच्छिद्यमानमात्मनि नास्तीति ग्राह्यमिदानीमुभयपर्यायो युगपदर्पणाया भवत्यवक्तव्यः, इतरत्र तु प्रधानभेदव्याख्याया द्विवचनादिनिर्देशः समीचीन', जातिविवक्षाया वा जातेरेकत्वादेकवचनसिद्धिरिति॥

एवमेते त्रयः सकलादेशा भाष्येणैव विभाविताः सङ्ग्रहव्यवहारानुसारिण आत्मद्रव्ये, सम्प्रति विकलादेशाश्चत्वारः पर्यायनयाश्रया वक्तव्यास्तत्प्रतिपादनार्थमाह भाष्यकारः—

भा०—देशादेशेन विकल्पयितव्यमिति।

टी०—इतिकरणो विकल्पेयत्ताप्रतिपादनार्थः। पर्यायास्तिकमिति नपुसकलिङ्गप्रक्रान्तेर्विकल्पयितव्यमित्याह, किं पुनः कारण भाष्यकृता सकलादेशत्रयवदितरेऽपि चत्वारो विकलादेशा भाष्येण नोक्ता इति?। अयमभिप्रायो भाष्यकारस्य लक्ष्यते—सकलादेशसयोगाच्चतुर्णां निष्पत्तिरिति बुझानाः, तत्राद्यद्वितीयविकल्पसयोगे तुर्यविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चेति। प्रथमतृतीयविकल्पसयोगे पञ्चमविकल्पनिष्पत्तिः—स्यादस्ति चावक्तव्यश्चेति। द्वितीयतृतीयविकल्पसंयोगे षष्ठविकल्पनिष्पत्तिः—स्यान्नास्ति चावक्तव्यश्चेति। प्रथमद्वितीयतृतीयविकल्पसयोगे सप्तमविकल्पनिष्पत्तिः—स्यादस्ति च नास्ति चावक्तव्यश्चेति। तत्राद्येषु त्रिषु विकल्पेषु सकलमेव द्रव्यमादिश्यते, चतुर्थादिषु पुनर्विकल्पीकृत खण्डश आदिश्यते। तदाह—देशादेशेनेत्यादि।

पर्यायादेशविकल्पा

---

१ 'किं कारण पुनर्भाष्यकृता' इति क-ख पाठ। २ 'विकलीकृत' इति क-ख-पाठः।

प्रकृत्यर्थं प्रयुक्तान्यतरैवकार वा परप्रतिपन्नैकान्तधर्मविशिष्ट वस्तु कथञ्चित् नियमकारिधर्मप्रत्यनीकपर्यायधर्मसम्बन्धीति स्यात् सत् स्यादनित्यनित्यादिधर्मात्मकमित्थ धर्म्यपीति वा स्याद्वादिभिः प्रतिज्ञायते, सुलभहेतुदृष्टान्तत्वात्, अतो द्रव्यास्तिकनयार्पणात् सोऽय धर्म्यभेदेनैव व्यपदेशः प्रत्यभिज्ञाप्रधानत्वात्, पर्यायार्थिकनिर्देशादस्येदमिति भेदभाक्त्वम्, एकवचनादिप्रदर्शन चैकस्यैव सत्त्वस्यासत्त्वस्य वा भजनाप्रभावितमनेकत्वमिति प्रतिपादनार्थम्, तत्र सद्भावपर्यायनिमित्तेनादेशेनार्पितमात्मरूपद्रव्यमित्येव सद्द्रव्यत्वमेव हि **सद्भावपर्यायः**, तद्धि द्रवति पर्यायान् द्रूयते वा तैर्द्रव्यमनेनाकारेणार्पित स्यादस्तीत्युच्यते, तस्य द्रव्यत्वादेः पर्यायस्यात्मपरिणामिकारणप्रभावितत्वात् ताद्रूप्याच्च, तच्चास्तित्व शेषषड्विकल्पापेक्षमेव सङ्गतिमनुभवति, सद्भावपर्यायद्वयनिमित्तादेव ज्ञानदर्शनोपयोगद्वयकारणक आदेशो द्रव्यम्, वक्ष्यत्युपरि–**द्रव्याश्रया निर्गुणा गुणाः** (अ०५,सू०४०) इति। तथा गणतिथसद्भावपर्यायकारणो वाऽयमादेशश्चैतन्यज्ञानदर्शनोपयोगाश्रयो द्रव्यमिति, एव द्वे द्रव्ये बहूनि वाऽप्युक्तेन प्रकारेणार्पितानि सद्भावपर्यायापेक्षया सद्व्यपदेशभाञ्जि भवन्ति, अथवैकस्मिन् सद्भावपर्यायविषयेऽर्पितमादिष्ट **द्रव्य वा द्रव्ये वा द्रव्याणि वा सत्** तथा द्वयोर्बहुषु विभाव्यम्, अविशिष्टस्य वा द्रव्यपदार्थस्यैकत्वद्वित्वबहुत्वपर्यायाः, तथा च तदर्प्यमाण स्यादस्त्येकत्वेनार्पितमेकसङ्ख्याविशेषरूपतयैवास्ति न द्वित्वबहुत्वाकारेण, अनेकधर्मिणो हि वस्तुनः कदाचित् किञ्चिद् विवक्ष्यते, युगपद्भूरिवक्तृविवक्षायामप्येकत्वादयो यौगपद्येनार्पणावशादुपलभ्यन्ते, सकलपर्यायशक्तिसङ्गतेः परिणामिनः, एकपुरुषाधारमातुलभ्रातृभागिनेयादिशक्तिवत्, एकेन वक्त्रा विवक्षिते प्रयोजनवशादेकत्वद्वित्वादि च सम्भवदप्युपेक्षित प्रयोजनाभावात्, अतस्तस्य तेनैव विवक्षिताकारेण कार्यसिद्धेः स्यादस्त्यात्मेत्युच्यते, न सर्वपर्यायार्पणया तदा तदस्ति तस्य वक्तुरिति प्रथमविकल्पभावना ॥

(सद्भावासद्भावापेक्षया द्रव्यस्यैकत्वादिविचारः)

(द्वितीयो विकल्प)

**भा०—असद्भावपर्याये वा, असद्भावपर्याययोर्वा, असद्भावपर्यायेषु वा, आदिष्टं द्रव्यं वा, द्रव्ये वा, द्रव्याणि वाऽसत्।**

**टी०—असद्भावपर्याये** वेत्यादिना द्वितीयविकल्प भावयति। आत्मनो ज्ञानदर्शनादिव्यतिरिक्ता गतिस्थित्यवगाहोपकारस्पर्शादयोऽसद्भावपर्याया वर्तमानजन्मनो वाऽतीतानागतास्तज्जन्मनि वाऽतिक्रान्तागामिन सर्वेऽप्यसद्भावपर्याया[1] तदर्पणया स्यान्नास्त्येवात्मेति, न सर्वथा नास्तित्वप्रतिपत्तिः, यदाऽऽत्मा गत्युपकारकपर्यायेणार्पितस्तदाऽऽत्मद्रव्यमसत्, तत्स्वभावकत्वेन तस्याद्रवणात्, सद्भावपर्यायप्रभावित वा द्रव्य स्वपरिणामिप्रभाविता वा पर्यायास्तत्र चैकमपि नास्तीत्यतोऽसदित्युच्यते, परपर्यायार्पणया नास्ति तदित्यर्थ । शेष पूर्ववद् विभाव्यम् ॥

---

१ 'तत्प्रभाव' इति क-ख-पाठ ।

पर्याया असत्त्वाद्रव्यत्वानात्मत्वाचेतनत्वादयः, तद्रव्यक्षेत्रकालभावसम्बन्धजनिताश्च द्रव्यपर्यायवृत्तिभेदाः, तत्र द्रव्यार्थादेशात् स्वद्रव्यतया द्रव्यत्वम्, पृथिव्यादित्वेनाद्रव्यत्वं तद्विशेषैश्च घटादिभिः, क्षेत्रतोऽसङ्ख्याताकाशदेशव्यापितया, न सर्वव्यापितया, कालतः स्वजात्यनुच्छेदादभिन्नकालता, पर्यायादेशाद् घटादिविज्ञानदर्शनभेदाः क्रोधाद्युत्कर्षापकर्षभेदाश्च, तथाऽनन्तकालवृत्तस्ववर्तनाभेदात् कालभेदः, भावतो ज्ञत्वं क्रोधादिमत्त्वं च, एवं यद्वचो द्रव्यार्थपर्यायार्थयोर्वृत्तिभेदाः सर्वेऽपि तस्यांशाः, तैर्द्रव्यपर्यायरूपैर्नैकमिष्यमाणो नानारूप आत्मोच्यते । भावना तु स्यादस्ति च नास्ति च, द्रव्यार्थभेदेन चैतन्यसामान्येनास्ति, चैतन्यविशेषविवक्षाया वाऽस्त्येकोपयोगत्वात्, पर्यायतस्तु अचेतन्येन नास्ति, घटोपयोगकाले वा पटाद्युपयोगेनासन्, चैतन्येन तद्विशेषेण वा वर्तमान एव तदभावेन तद्विशेषाभावेन वर्तते इत्युभयाधीनस्तस्यात्मा, अन्यथाऽऽत्माभाव एव स्यात् । एवं सर्वसिद्धान्तेषु पदार्थाः परस्परविरुद्धार्थत्वात् तदतद्रूपसमुच्चयात्मकाश्चतुर्थविकल्पोदाहरणीयाः ॥

चतुर्थो विकल्पः

पञ्चमविकल्पस्तु स्यादस्ति चावक्तव्यश्चात्मेति, तत्रानेकद्रव्यपर्यायात्मकस्य सतः कश्चिद् द्रव्यार्थविशेषमाश्रित्यास्तीत्यात्मनो व्यपदेशः, तस्यैवान्यात्मद्रव्यसामान्यं तद्विशेषं द्वय वाऽङ्गीकृत्य युगपद्विवक्षायामवक्तव्यता, स्फुटतरमेतद् विभाव्यते, स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा द्रव्यपर्यायसामान्यमुरीकृत्य, वस्तुत्वावस्तुत्वसत्त्वासत्त्वादिना विशेषेण वा मनुष्यत्वामनुष्यत्वादिना युगपदभेदविवक्षायामवाच्यः, यतः सर्वेऽपि तस्यैकस्यात्मनस्तदैव विकल्पाः सम्भवन्तीति ॥

पञ्चमो विकल्पः

षष्ठविकल्पोऽपि त्रिभिरात्मभिर्व्यंशः स्यान्नास्ति चावक्तव्यश्चात्मेति, नान्तरेणात्मभेदं वस्तुगतं नास्तित्वमवक्तव्यरूपानुविद्धं शक्यं कल्पयितुं वस्तुनः, तथापि सद्भावात् तत्र नास्तित्वं पर्यायाश्रयम्, स च पर्यायो युगपद्वृत्तः क्रमप्रवृत्तो वा, सहावस्थाय्यविरोधादात्मनो धर्म एककाल एव, यथा चेतनोपयोगवेदनाहर्षसम्यक्त्वहास्यरतिपुरुषवेदायुर्गतिजात्यादिसत्त्वद्रव्यत्वामूर्तत्वकर्तृत्वभोक्तृत्वान्यत्वानादित्वासङ्ख्यातप्रदेशत्वनित्यत्वादिः,क्रमवर्ती तु क्रोधादिर्देवत्वादिर्बालत्वादिर्ज्ञानितादिः स्वस्थानेऽनेकभेदवृत्तः, तत्रैकोऽवस्थितो द्रव्यार्थो जीवनामा नैवास्ति कश्चिच्चेतनाव्यतिरिक्तः क्रोधादिक्रमवृत्तधर्मरूपैरनन्तर्यमात्रव्यतिरिक्तो वा, अत एव तु धर्मास्तथासन्निविष्टाः सत्त्वव्यपदेशव्यवहारभाजो भवन्तीति, अतो नास्ति पर्यायार्थादेवविधो द्रव्यार्थस्य कश्चिदंशो नास्तीति तेन रूपेणाभावात्, न पुनः सर्वथैव नास्तित्वम्, विशिष्टस्याभावस्य विवक्षितत्वात्, पर्यायांशः सर्वार्थज्ञातृत्वासत्सर्वव्यापारविनियोगात् सर्ववस्तुत्वेन सन्निति द्रव्यार्थांशः, आभ्यां सह-विवक्षायामवाच्य इति द्वितीयोऽशः ॥

षष्ठो विकल्पः

१ वाऽन्य आत्म०' इति ग पाठः । २ 'बत्वादिज्ञातादि दवत्वादिस्वस्थान' इति क-ख-पाठः । ३ 'त्वासर्व०' इति क पाठः ।

सकलस्य वस्तुनो बुद्धिच्छेदविभक्तोऽवयवो देशस्तस्मिन् देशे आदेशो देशादेशस्तेन देशादेशेन विकल्पनीयः–व्याख्येयम्,आत्मादितत्त्वमित्येव विकल्पचतुष्टयस्यापि ग्रहणम् । तत्र चतुर्थ उभयप्रधानो विकल्पः, क्रमेणोभयस्यापिशब्देनाभिधेयत्वात्, देशादेशो हि विकलादेशस्तस्य वस्तुनो वैकल्य, स्वेन तत्त्वेनाप्रविभक्तस्यापि विविक्त गुणरूप स्वरूपेणोपरञ्जकमपेक्ष्य प्रतिकल्पितमशभेद कृत्वाऽनेकान्तात्मकैकत्वव्यवस्थाया नरसिंहनरसिंहत्ववत् समुदायात्मकमात्मरूपमभ्युपगम्याभिधान विकलादेशः, न तु केवलसिंहसिंहत्ववदेकात्मकैकत्वपरिग्रहात् , यथा च प्रतिपादनोपायार्थपरिकल्पितानेकनीलपीतादिभागा निर्विभागमनेकात्मकमेक चित्र सामान्यरूपमुच्यते, तथा वस्त्वप्यनेकधर्मस्वभावमेकम् , दृष्टश्चाभिन्नात्मनोऽर्थस्य भिन्नो गुणो भेदकः, परुद्वान् पटुरासीत् पटुतर एषमोऽन्य एवाभिन्नतरः, पटुत्वातिशयो गुणः सामान्यपटुत्वाद् गुणादन्यः, स वस्तुनो भेद कल्पयति, भिन्नप्रयोजनार्थिना तथाश्रितत्वात्, अनेकात्मक चैकत्वमात्मादेः, यतोऽनेकं शुद्धाशुद्धं द्रव्यार्थमाश्रित्य पर्यायनयं चैकात्मनो वृत्तिस्तथात्मकोऽसौ तद्भावभावित्वाद्, घटमृद्रूत्वकत्ववत् पुरुषपाण्याद्यात्मकत्ववद् वा, अतस्ते तस्यारम्भकत्वाद् भागाः पुरुषस्येव पाण्यादयो वस्त्वंशमनुभवन्ति क्रमेण वृत्ताः क्रमयौगपद्याभ्यां वा, चतुर्थे तावत् समुच्चयात्मके न क्रमेण वृत्ताः, पञ्चमषष्ठयोरुपचितक्रमयुगपद् वृत्ताः, सप्तमे प्रचितक्रमयौगपद्याभ्यां वृत्ताः स्याच्च-श्चावक्तव्यश्चेत्यनेकबुद्धिबुद्धित्वाद् अनेकबुद्धिर्हि बुद्धिर्भवति द्रव्यपर्यायेषु सत्सु त्र्यात्मिका, यतोऽनेकां सद्रूपामसद्रूपामवक्तव्यरूपा च बुद्धिं भिन्नामिव क्रमवतीमिवाश्रित्याभिन्नैकाक्रमावस्तुरूपा वाक्यार्थबुद्धिर्भवति, तस्माद् भेदक्रमप्रतिभासविज्ञानहेतुत्वाद् भागास्ते भवन्त्यत्राविभक्तस्यैकस्यापि वस्तुनः । एव चानेकस्वभावेऽर्थे सति वक्तुरिच्छावशात् कदाचित् केनचिद् रूपेण वक्तुमिष्यते, विवक्षायत्ता च वचसः सकलादेशता विकलादेशता च द्रष्टव्या, द्रव्यार्थजात्यभेदात् तु सर्वद्रव्यार्थभेदानेवैक द्रव्यार्थं मन्यते, यदा पर्यायजात्यभेदाच्चैकं पर्यायार्थं सर्वपर्यायभेदान् प्रतिपद्यते तदा स्वविवक्षितस्वजातिभेदत्वात् सकल वस्त्वेकद्रव्यार्थाभिन्नमेकपर्यायार्थभेदोपचरित तद्विशेषैकभेदोपचरित वा तन्मात्रमेकमद्वितीयाश्च ब्रुवन् सकलादेशः स्यान्नित्य इत्यादिस्त्रिविधोऽपि नित्यत्वानित्यत्वयुगपद्भावैकत्वरूपैकार्थाभिधायी, यदा तु द्रव्यपर्यायसामान्याभ्यां तद्विशेषाभ्या वा तद्यौगपद्येन वा वस्तुन एकत्व तद्‌तदात्मक समुच्चयाश्रय चतुर्थविकल्पे स्वांशयुगपद्वृत्त क्रमवृत्त च पञ्चमषष्ठसप्तमेषूच्यते तथाविवक्षावशात् तदा तु तथाप्रतिपादयन् विकलादेशः, ते हि द्रव्यपर्यायास्तस्य देशा तदादेशेनादेश एको ह्यनेकदेश आत्माऽभिधीयते, तत्र द्रव्यार्थसामान्येन तावद् वस्तुत्वेन सन्नात्मा, पर्यायसामान्येनावस्तुत्वेनासन्निति, विशेषस्त्वात्मनि स्वद्रव्यत्वात्मत्वचेतनत्वद्रष्टृत्वज्ञातृत्वमनुष्यत्वादिरनेको द्रव्यार्थभेद ,तथा अतप्रतियोगिनः

सकलादेशविकलादेशोत्पत्तिः

१ ' तत्र व० ' इति ग-पाठ । २ ' रूपमस्याभिधान ' ३ ' वस्त्वनेक ' इति क-पाठ । ४ ' नेकबुद्धित्वात् ' इति क पाठः । ५ ' च सकल ' इति क-पाठ ।

पर्याया असत्त्वाद्रव्यत्वानात्मत्वाचेतनत्वादयः, तद्द्रव्यक्षेत्रकालभावसम्बन्धजनिताश्च द्रव्यपर्यायवृत्तिभेदाः, तत्र द्रव्यार्थादेशात् स्वद्रव्यतया द्रव्यत्वम्, पृथिव्यादित्वेनाद्रव्यत्व तद्विशेषैश्च घटादिभिः, क्षेत्रतोऽसङ्ख्यातकाशदेशव्यापितया, न सर्वव्यापितया, कालतः स्वजात्यनुच्छेदादभिन्नकालता, पर्यायादेशाद् घटादिविज्ञानदर्शनभेदाः क्रोधाद्युत्कर्षापकर्षभेदाश्च, तथाऽनन्तकालवृत्तस्वनर्तनाभेदात् कालभेदः, भावतो ज्ञत्व क्रोधादिमत्त्व च, एव बहवो द्रव्यार्थपर्यायार्थयोर्वृत्तिभेदाः सर्वेऽपि तस्यांशाः, तैर्द्रव्यपर्यायरूपैर्नैकमिष्यमाणो नानारूप आत्मोच्यते । भावना तु स्यादस्ति च नास्ति च, द्रव्यार्थभेदेन चैतन्यसामान्येनास्ति, चैतन्यविशेषविवक्षाया वाऽस्त्येकोपयोगत्वात्, पर्यायतस्तु अचैतन्येन नास्ति, घटोपयोगकाले वा पटाद्युपयोगेनासन्, चैतन्येन तद्विशेषेण वा वर्तमान एव तदभावेन तद्विशेषाभावेन वर्तते इत्युभयाधीनस्तस्यात्मा, अन्यथाऽऽत्माभाव एव स्यात् । एव सर्वसिद्धान्तेषु पदार्थाः परस्परविरुद्धार्थत्वात् तदतद्रूपसमुच्चयात्मकाश्चतुर्थविकल्पोदाहरणीयाः ॥

चतुर्थो विकल्प.

पञ्चमविकल्पस्तु स्यादस्ति चावक्तव्यश्चात्मेति, तत्रानेकद्रव्यपर्यायात्मकस्य सतः कश्चिद् द्रव्यार्थविशेषमाश्रित्यास्तीत्यात्मनो व्यपदेशः, तस्यैवान्यात्मद्रव्यसामान्य तद्विशेष द्वयं वाऽङ्गीकृत्य युगपद्विवक्षायामवक्तव्यता, स्फुटतरमेतद् विभाव्यते, स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा द्रव्यपर्यायसामान्यमुरीकृत्य, वस्तुत्वावस्तुत्वसत्त्वासत्त्वादिना विशेषेण वा मनुष्यत्वामनुष्यत्वादिना युगपदभेदविवक्षायामवाच्यः, यतः सर्वेऽपि तस्यैकस्यात्मनस्तदैव विकल्पाः सम्भवन्तीति ॥

पञ्चमो विकल्पः

षष्ठविकल्पोऽपि त्रिभिरात्मभिर्व्यंशः स्यान्नास्ति चावक्तव्यश्चात्मेति, नान्तरेणात्मभेदं वस्तुगत नास्तित्वमवक्तव्यरूपानुविद्धं शक्य कल्पयितु वस्तुनः, तथापि सद्भावात् तत्र नास्तित्व पर्यायाश्रयम्, स च पर्यायो युगपद्वृत्तः क्रमप्रवृत्तो वा, सहावस्थाय्यविरोधादात्मनो धर्म एककाल एव, यथा चेतनोपयोगवेदनाहर्षसम्यक्त्वहास्यरतिपुरुषवेदायुर्गतिजात्यादिसत्त्वद्रव्यत्वामूर्तत्वकर्तृत्वभोक्तृत्वान्यत्वानादित्वासङ्ख्यातप्रदेशत्वनित्यत्वादिः,क्रमवर्ती तु क्रोधादिदेवत्वादिनालत्वादिज्ञानितादिः स्वस्थानेऽनेकभेदवृत्तः, तत्रैकोऽवस्थितो द्रव्यार्थो जीवनामा नैवास्ति कश्चिचेतनाव्यतिरिक्तः क्रोधादिक्रमवृत्तधर्मरूपैर्नैरन्तर्यमानव्यतिरिक्तो वा, अत एव तु धर्मास्तथासन्निविष्टाः सत्त्वव्यपदेशव्यवहारभाजो भवन्तीति, अतो नास्ति पर्यायार्थादेवविधो द्रव्यार्थस्य कश्चिदंशो नास्तीति तेन रूपेणाभावात्, न पुनः सर्वथैव नास्तित्वम्, विशिष्टस्याभावस्य विवक्षितत्वात्, पर्यायांशः सर्वार्थज्ञातृत्वासत्सर्वव्यापारविनियोगात् सर्ववस्तुत्वेन सन्निति द्रव्यार्थांशः, आभ्या सह-विवक्षायामवाच्य इति द्वितीयोऽशः ॥

षष्ठो विकल्प

१ वाऽन्य आत्म० इति ग पाठ । २ 'वत्वादिज्ञातादि दवत्वादिस्वस्थाने' इति क-ख-पाठ । ३ 'त्वासर्व०' इति क-पाठ ।

अधुना सप्तमविकल्पश्चतुर्भिरंशैस्त्र्यशः । कश्चिद् द्रव्यार्थविशेषमाश्रित्यास्तित्व पर्यायविशेप च कश्चिदङ्गीकृत्य नास्तित्वं समुचितरूप भवति, द्वयोरपि प्राधान्येन विवक्षितत्वात्, य(त)था द्रव्यसामान्येन पर्यायसामान्येन च युगपदवक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यश्चात्मेति । भावना तु द्रव्यार्थात् सति द्रव्यत्वे देहेन्द्रियादिव्यतिरिक्तात्मत्वेन विशेषेण नास्तित्वमतोऽस्ति च नास्ति च स एवात्मा, द्रव्यपर्यायसामान्यसदसत्त्वाभ्यां युगपदवाच्य इति । एवमर्थानुरोधाद् विवक्षावशाच्च सप्तधैव वचनप्रवृत्तिः, नान्यथाऽपि, प्रवृत्तिनिमित्ताभावात्, एप च मार्गो द्रव्यार्थपर्यायार्थाश्रयः, तौ च सङ्ग्रहाद्यात्मकौ, सङ्ग्रहादयश्चार्थशब्दनयरूपेण प्रधाविताः, तत्र सङ्ग्रहव्यवहारर्जुसूत्रैरर्थनयैर्यौ द्रव्यार्थपर्यायार्थौ तदाश्रयैषा सप्तभङ्गी । तत्र अनपेक्षितोपदेशकशब्दव्यापारमिन्द्रियानिन्द्रियनिमित्तमर्थरूपोत्पादित मतिज्ञानम्, अर्थनया वक्तृपरिच्छेदविषयाः, ते त्वर्थपृष्ठेनैवार्थं गमयन्ति । शब्दनयास्तु साम्प्रतिकसमभिरूढैवभूतनयाः श्रोतृविषयाः श्रुतज्ञानात्मकाः शब्दरूपरूपितविज्ञानत्वाच्छब्दप्रमाणकाः, यच्छब्द आह यथा च तथैवार्थ इति शब्दपृष्ठेनार्थपरिच्छेद कुर्वन्ति, अत एवैतेष्वभिधानस्वरूपशुद्धिपरा चिन्ता, चक्षुर्विमलीकरणाञ्जनवत् । तत्रार्थनयाः सत्त्वासत्त्ववर्तमानसत्त्वमात्रैपिणः प्रत्येकात्मकाः समुक्ताश्च सप्तविधवचननिर्वचनप्रत्यलाः । विविक्तसत्त्वमात्रपरिग्रहात् सत्त्वसङ्ग्रहः, अन्यासत्त्वमेव[1] सत्त्वमिति व्यवहारः, वर्तमानप्रधानत्वाद् वर्तमानमेव सत्त्वमृजुसूत्रः । तत्र स्यादस्तीति सङ्ग्रहः १ स्यान्नास्तीति व्यवहारः २ सङ्ग्रहव्यवहारयोगात् स्यादवक्तव्यः ३ सङ्ग्रहव्यवहारविभागसंयोगादेव स्यादस्ति च नास्ति च ४ स्यादस्त्यवक्तव्यश्चेत्यत्र सङ्ग्रहः सङ्ग्रहव्यवहारौ चाविभक्तौ ५ स्यान्नास्त्यवक्तव्यश्चेत्यत्र व्यवहार' सङ्ग्रहव्यवहारौ चाविभक्तौ ६ स्यादस्ति नास्त्यवक्तव्यश्चेत्यत्र विभक्तौ सङ्ग्रहव्यवहारावविभक्तौ वा ७, इत्येवमर्थपर्यायैः सप्तधा वचनव्यवहारः। व्यञ्जनपर्यायाः शब्दनयास्ते त्वभेदभेदद्वारेण वचनमिच्छन्ति, शब्दनयस्तावत् समानलिङ्गाना समानवचनाना च शब्दानामिन्द्रशक्रपुरन्दरादीना वाच्य भावार्थमेवाभिन्न प्रभ्युपैति, न जातुचिद् भिन्नलिङ्ग भिन्नवचन वा शब्द स्त्री दारास्तथाऽऽपो जलमिति, समभिरूढस्तु प्रत्यर्थ शब्दनिवेशादिन्द्रशक्रादीना पर्यायशब्दत्व न प्रतिजानीते, अत्यन्तभिन्नप्रवृत्तिनिमित्तत्वाद् भिन्नार्थत्वमेवानुमन्यते, घटशक्रादिशब्दानामिवेति, एवभूत' पुनर्यथासद्भाव वस्तु वचसो गोचरमापृच्छतीच्छति, चेष्टाविष्ट एवार्थो घटशब्दवाच्यश्चित्रालेखनोपयोगपरिणतश्च[2] चित्रकार., चेष्टारहितस्तिष्ठन् घटो न घटशब्दवाच्य., तच्छब्दार्थरहितत्वात्, कुटशब्दवाच्यार्थवत्, नापि भुञ्जानः शयानो वा चित्रकाराभिधानाभिधेयश्चित्रज्ञानोपयोगपरिणतिशून्यत्वाद् गोपालादिवत्, एवमभेदभेदार्थवाचिनोऽने-

सप्तमो विकल्प

नयत्रयापेक्षया सप्तभङ्गी

शब्दनया

१ 'अन्यासत्त्वमिति' इति क-पाठ । २ 'चित्रालेख्यतोपयोग' इति क-ख-पाठः ।

कैकशब्दवाच्यार्थानलम्भिनश्च शब्दप्रधाना अर्थोपसर्जनाः शब्दनयाः प्रदीपवदर्थस्य प्रतिभासकाः व्यञ्जनपर्यायसंज्ञकाः। तदेवमर्थव्यञ्जनपर्यायार्पणानर्पणद्वारेकानेकात्मकैकार्थनिरूपणवदभिधानप्रत्ययविषयाऽपि भावनाऽभिधेया। तत्र पुद्गलद्रव्यपरिणतिविशेषः शब्दोऽभिधानः, पुद्गलद्रव्यं चातीतवर्तमानागामिभूरिपर्यायपरिणाम्यर्पितभजनापेक्षया सदसन्नित्यानित्याद्यनेकधर्मात्मकम्, प्रत्ययोऽपि हि ग्रहणलक्षणात्मद्रव्याशापेक्षया सङ्ख्यापरिमाणाकाराद्यनेकरूपपर्यायापेक्षया च सदसन्नित्यानित्यादिस्वभाव इत्येव सदसन्नित्यानित्यादिस्वभाव जगत् पञ्चास्तिकायात्मकमर्पितानर्पितलक्षणसकलशास्त्रगर्भत्रिसूत्रीविन्यासस्याद्वादप्रक्रियासङ्गतेः सिद्धम्॥२१॥

**भा०—अत्राह—उक्तं भवता (अ० ५, सू० २६)—सङ्घातभेदेभ्यः स्कन्धा उत्पद्यन्ते इति। तत् किं संयोगमात्रादेव सङ्घातो भवति, आहोस्विदस्ति कश्चिद् विशेष इति ?। अत्रोच्यते—**

टी०—अत्राह-उक्त भवतेत्यादिः सम्बन्धग्रन्थः। प्रतिपादितार्थसारणप्रश्नेनाज्ञः प्रकृतार्थशेषसम्बन्धमभिधापयति, कारणायत्तजन्मा कार्यप्रसवः, सङ्घातात् स्कन्धाः समुत्पद्यन्ते, इतिशब्दो यस्मादर्थः, तच्छब्दस्तस्मादर्थः, यस्मात् सङ्घातात् स्कन्धानामुत्पत्तिः प्रतिधीयते तस्मात् सन्देहः, किं संयोगमात्रादेव द्व्यणुकादिलक्षणः स्कन्धो भवति, आहोस्विदस्त्यत्र कश्चित् सयोगविशेष इति, मात्रग्रहणं सेनावनादिवत् केवलससक्तिप्रतिपादनार्थम्, सयोगमात्र न तु सयोगविशेषा', इतिशब्दः आशङ्कयत्ताप्रतिपत्तये, आचार्यस्यापि चित्तपरिवर्ती संयोगविशेषस्तत्प्रतिपादनायात्रोच्यते इत्याह, अत्रेति प्रश्नविषयाभिसम्बन्धः यत्पृष्टस्तन्निश्चीयते विधीयत इति, मनीपितसंयोगविशेषाभिव्यक्त्यर्थमाह—

पुद्गलबन्धहेतु

**भा०—सति संयोगे बद्धस्य सङ्घातो भवतीति। अत्राह—अथ कथं बन्धो भवतीति ?। अत्राह—**

टी०—सतीत्यादि। सति परस्परसङ्घट्टलक्षणे संयोगे बद्धस्यैव-एकत्वपरिणतिभाजः सङ्घातात् स्कन्धोत्पत्तिः, एवकारार्थमितिकरणम्, पुद्गलाना पर्यायानन्त्येऽपि स्वजात्यनतिक्रमेण परस्परविलक्षणपरिणामाहितसामर्थ्यात् सति सयोगविशेषे केषाञ्चिदेव बन्धो न सर्वेषामिति निश्चितमेतत्, सयोगविशेषात् स्कन्धोत्पादः, न पुनर्व्यज्ञायि स्वरूपेण सयोगविशेषः, तत्परिज्ञानाय प्रश्नेनोपक्रम पुनः परस्य प्रकटयति—अत्राहेति। सति सङ्घाते बन्धस्य सतः स्कन्धपरिणाम इति बन्धमेव पृच्छति—अथ बन्धः कथं भवतीति। अथेत्यानन्तर्यार्थः, बद्धस्य स्कन्धपरिणामो भवतीत्युक्तेऽनन्तर च य एव जिज्ञास्यते बन्धः-एकत्वपरिणामः स कथ-केन प्रकारेणाण्वोरणूना वा जायते इति, किं परस्परानुप्रवेशेनाहोस्वित् सार्वात्म्येन प्रवे-

१ 'परिणत्यर्पितभजनापेक्षया' इति क ख-पाठ। २ 'नित्यादि' इति क ख पाठ। ३ 'जायन्त' इति ग-पाठो विचारणीय।

शाभावेऽपीति ? अत्रोच्यते—परस्परानुप्रवेशस्तावन्नैवेष्यतेऽण्वोरणूनां वा सुषिराभावात्, प्राक् चैतन्निर्णीत प्रपञ्चतः, स्थापित चेद्–परिणतिविशेषादणूना सर्वात्मना बन्धो भवति, अयस्पिण्डतेजसोरिवान्योन्यप्रदेशाभावेऽपि गुणविशेषात् सार्वात्म्येनेष्यते बन्धः । कीदृशः पुनर्गुणविशेषात् स तादृशो बन्धः स्यादित्याह—

## सूत्रम्—स्निग्धरूक्षत्वाद् बन्धः ॥ ५–३२ ॥

भा०—स्निग्धरूक्षयोः पुद्गलयोः स्पृष्टयोर्बन्धो भवति ॥ ३२ ॥
अत्राह–किमेष एकान्त इति ? । अत्रोच्यते—

टी०—स्निग्धरूक्षयोरित्यादि भाष्यम् । स्नेहो हि गुणः स्पर्शाख्यः, तत्परिणामः स्निग्धः, तथा रूक्षोऽपि, एकः स्निग्धोऽपरो रूक्षः, तयोर्भावः स्निग्धरूक्षत्वं तत्परिणामापत्तिः तस्मात् स्निग्धरूक्षत्वादिति हेतौ पञ्चमी, अण्वोरणूना वा बन्धो भवति, स्निग्धरूक्षयोरिति भाष्यकृता विभज्य द्विवचनप्रयोगोपन्यासोऽकारि सर्वाल्पस्कन्धज्ञापनाय, नातः परमल्पावयवः स्कन्धोऽस्ति, स्निग्धरूक्षव्यवहारः क्षेत्रकालविषयोऽपि भाक्तः समस्तीति तद्व्युदासाय पुद्गलयोरित्याह, पूरणाद् गलनाच्च पुद्गलाः, पूरकत्वेन स्कन्धान् निर्वर्तयन्ति, गलनेन स्कन्धभेद विदधति, स्पृष्टयोरिति सयुक्तयोर्नासयुक्तयोरिति, अनेन सयोगमात्र गृहीत सयोगपूर्वकसकलबन्धज्ञापनार्थम्, तत्र बन्धात् प्रतिघातो जायतेऽण्वोरणूना वा, प्रतिघातश्चैकदेशावगाहेऽन्योन्यं प्रतिहननम्, ततो रौक्ष्यस्नेहविशेषाद् बन्धः–अप्यन्तरेणाणोः श्लेषः, मृद्रजोभिस्तृणादिबन्धवत्, सन्ति ह्यणव एकगुणस्निग्धादिक्रमेण सङ्ख्येयासङ्ख्येयानन्तानन्तगुणस्निग्धाः, तथैकगुणरूक्षादिक्रमेण हीनमध्यमोत्कृष्टसङ्ख्येयासङ्ख्येयानन्तानन्तगुणरूक्षाः, तोयाजागोमहिष्युष्ट्रीक्षीरघृतस्नेहानुमानप्रकर्षाप्रकर्षवत्, चिक्कणत्वलक्षणः परिणामः स्नेहः, तद्विपरीतो रूक्षः, ततश्च सश्लेषकारणपरिणतिमत्त्वात् सर्वात्मसयोगबन्धप्रसिद्धिः, प्रत्यक्षश्चैवंविधद्रव्याणां बन्धविशेषो नातीव युक्तिमपेक्षते, युक्तिरपि–सहतमहद्द्रव्य घटादि प्रत्यक्षमणुबन्धस्यानुमापकम्, नाणुसत्सहतिविशेषमन्तरेण महत् सहत युज्यते, एवमेव चापकर्षणधारणनोदनादिव्यवहारसिद्धिर्न त्वन्यथा, तथानुपग्रहणान् प्रतीघातः परमाणोः, लोकान्ते ह्युपग्राहकधर्मद्रव्याभावाद् प्रतिहन्यतेऽणुरगतिः सन्, तथाऽणोः प्रतीघातो बन्धनयोग्य परिणाममन्तरेणाप्यते, नापतता ( ? ) स्पर्शित्वान्मूर्तिमत्त्वाच, सप्रतिघातस्य च बन्धो दृष्टः श्लेषरूपरागादेः, अतः सुष्ठूच्यते–स्निग्धरूक्षत्वात् पुद्गलयोः सयुक्तयोर्बन्धो भवतीति । इतिकरण उपप्रदर्शनार्थः, एव गृहाणेति ॥ ३२ ॥

अत्राहेत्यादिमन्बन्धप्रतिपत्तिः । किमेष एकान्त इति ? । किमिति प्रश्नार्थः, एष

---

१ 'नोक्त' इति क-पाठः । २ 'क्षादि नन्तगुणरू' इति पाठ ग पुस्तके नास्ति, तत्र तु मुद्रणदोष इति दृष्ट प्रतिभाति ।

इत्यन्तरयोगाथोभिसम्बन्धः, स्निग्धगुणाना रूक्षगुणाना च बन्धो भवतीति, इतिशब्दोऽवधारणार्थः। किमेष नियम एव सर्वस्य स्निग्धगुणस्य रूक्षगुणेन बन्ध इति, एवं पृष्टे अत्रोच्यते इत्याह। सति विधानविशेषेण प्रवृत्तेर्निकृष्टम व्यमोत्कृष्टस्निग्धरूक्षाणामनभिप्रेतार्थप्रसङ्गनिनिवृत्त्यर्थमिदमभिदध्महे—

## सूत्रम्–न जघन्यगुणानाम् ॥ ५–३३ ॥

टी०—अतिप्रसक्तस्य विधेरयमपवादारम्भः ॥

भा०—जघन्यगुणस्निग्धानां जघन्यगुणरूक्षाणा च परस्परेण बन्धो न भवति ॥ ३३ ॥

टी०—जघन्यगुणस्निग्धानामित्यादि भाष्यम्। प्रकृतत्वाद् बन्धः प्रतिषिध्यते नशब्देन, केषा बन्धो न भवति? जघन्यगुणस्निग्धानां जघन्यगुणरूक्षाणां च। जघने भवो जघन्यः, ( जघन्य इवान्यो जघन्यः ) निकृष्ट इत्यर्थः, जघन्यश्चासौ गुणश्च जघन्यगुणः ( जघन्यगुणः ) स्निग्धो येषा ते जघन्यगुणस्निग्धाः पुद्गलास्तेषा जघन्यगुणरूक्षाणा च परस्परेण बन्धः प्रतिषिध्यते, परस्परेणेति सजातीयविजातीयविशेषप्रतिपादनम्। स्वस्थाने स्निग्धस्य स्निग्धेन नेष्यते बन्धः, रूक्षस्यापि रूक्षेण नैवास्ति बन्धः, तथा परस्थानेऽप्येकगुणस्निग्धस्यैकगुणरूक्षेण नैवास्ति बन्धः, सत्यप्येषा सयोगे स्निग्धरूक्षगुणत्वे च न परस्परमेकत्वपरिणविलक्षणो बन्धः समस्ति, किं पुनः कारणमत्रैषां बन्धो न भवतीति? तादृग्विधपरिणतिशक्तेरभावात्, परिणामशक्तयश्च द्रव्याणां विचित्राः क्षेत्रकालाद्यनुरोधिन्यः प्रयोगविस्रसापेक्षाः [1]भवन्ति, न जातुचित् पर्यनुयोगवशेन पर्यनुयोक्तुरिच्छामनुरुध्यते, जघन्यश्च स्नेहगुणः स्तोकत्वादेव जघन्यगुणरूक्ष पुद्गल न प्रत्यलः परिणामयितुम्, तथा रूक्षगुणोऽप्यल्पत्वाज्जघन्यगुणस्निग्धं नात्मसात्कर्तुं समर्थः, सङ्ख्यावाची चाय गुणशब्दः, यथैक एवास्य गुणः पुरुषस्येति, आधिक्यार्थे वा द्विगुणत्रिगुणमिति यथा, अस्ति च स्नेहादिगुणाना प्रकर्षापकर्षभेदः, तद् यथा–जलादजाक्षीर स्निग्धम्, अजाक्षीराद् गोपयः, गोपयसो महिषीपयः, ततः करभीपय इत्युत्तरोत्तरस्नेहाधिकत्वम्, एषामेव पूर्वं पूर्वं रूक्षम्, तत्रैकगुणस्निग्धस्यैकगुणस्निग्धेनैन द्व्यादिना सर्वेण सदृशेन सङ्ख्येयासङ्ख्येयानन्तानन्तगुणस्निग्धेन वा नास्ति बन्धः, तथैव चैकगुणरूक्षस्यैकगुणरूक्षादिभिः सदृशैर्यावदनन्तगुणरूक्षैर्न भवति बन्धः, सूत्रव्यापारस्तु जघन्यगुणस्निग्धाना जघन्यगुणरूक्षाणा च पुद्गलाना नास्ति बन्धः परस्परम्, शेष वक्ष्यमाणसूत्रव्याख्येयमुक्तं प्रसङ्गतः, इत्येवमेतौ जघन्यगुणस्निग्धरूक्षौ विहायान्येषा मध्यमोत्कृष्टस्निग्धाना रूक्षैः सह

---

१ अन् चिद्वान्तस्यो भाग क ख-योनास्ति। २ 'रूक्षादिभि' इति क ख पाठ।

स्निग्धैश्च रूक्षाणां परस्परेण बन्धो भवति इति, अर्थापत्तिलभ्योऽयमर्थः सामर्थ्यादवगम्यते, स च यादृशो यथा च भवति त तादृश तथा वक्ष्यामः, इहैतावदुपयुज्यत इति ॥ ३३ ॥

**भा०—अत्राह–उक्तं भवता–जघन्यगुणवर्जाना (स्निग्धानां) रूक्षेण रूक्षाणां च स्निग्धेन सह बन्धो भवतीति। अथ तुल्यगुणयोः किमत्यन्तप्रतिषेध इति ?। अत्रोच्यते—न जघन्यगुणानामित्यधिकृत्येदमुच्यते—**

टी०—अत्राहेत्यादिना ग्रन्थेन सम्बन्ध विधत्ते । प्रतिपादितं भवताऽनन्तर जघन्यगुणस्निग्धरूक्षयोर्नास्ति बन्धः, तन्निषेधादन्येषा जघन्यगुणवर्जानां बन्धप्रसङ्गे सदृशानां प्रतिषेधे यत्नो विधेय इत्यर्थापत्तिप्रापित चेद द्विगुणस्निग्धस्यैकगुणरूक्षेण सह एकगुणस्निग्धस्य द्विगुणरूक्षेण सह बन्धो भवतीति । एतदुक्त भवति–निकृष्टस्निग्धरूक्षयोर्बन्धप्रतिषेधान्मध्यमोत्कृष्टस्निग्धरूक्षगुणानां परस्परेण बन्धः प्रतिज्ञातोऽर्थतः पृथगधिकरणानाम् । अथ तुल्यगुणयोः किमत्यन्तप्रातिषेध इति प्रश्नयति, प्रस्तुतानन्तरवचनोऽयमथशब्दः, तुल्यगुणयोः स्निग्धाधिकरणयोरेकैकगुणयोः किमेकान्तेनैव प्रतिषेध इति प्रश्ने कृते अत्रोच्यत इत्याह। अत्यन्तप्रतिषेध एव, काधिकृत इति चेदित्याह, न जघन्यगुणानामित्यधिकृत्येदमुच्यते, यथैव स्निग्धरूक्षाणा जघन्यविषयाणा बन्धाभावस्तथैव गुणसाम्ये सदृशाना बन्धाभाव इति सम्बन्धनीयम्। अथवा स्निग्धरूक्षयोर्भिन्नाधिकरणयोर्बन्धप्रतिषेधः कृतोऽथ तुल्यगुणयोः किं प्रतिपत्तव्यमिति सामर्थ्यादध्याहार कृत्वा व्याख्येयम् , तुल्यगुणयोः स्निग्धाधिकरणयो रूक्षाधिकरणयोर्वा किं बन्धनिषेधः प्रतिपत्तव्यः, आहोस्विद् बन्धविधिरिति ?। आचार्य आह–अत्यन्तप्रतिषेध इति, एकान्तेनैव प्रतिषेधः, स पुनर्न जघन्यगुणानामित्यत्र सूत्रेऽधिकृतस्तमाश्रित्योच्यते—

## सूत्रम्—गुणसाम्ये सदृशानाम् ॥ ५–३४ ॥

टी०—अथवा स्निग्धरूक्षगुणः ॥

**भा०—गुणसाम्ये सति सदृशाना बन्धो न भवति । तद् यथा–तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन, तुल्यगुणरूक्षस्य तुल्यगुणरूक्षेणेति ॥**

टी०—गुणसाम्ये सतीत्यादि भाष्यम् । गुणा'–स्निग्धरूक्षास्तेषा समता साम्य तस्मिन् गुणसाम्ये, सतीत्यनेन विशिष्टार्था सप्तमी सूचयति, "यस्य च भावेन भावलक्षणम्" (पा०अ०२, पा०३,सू०३७)इति निमित्तसप्तम्येषा, सति गुणसाम्ये तुल्यसङ्ख्यत्वे **सदृशाना बन्धो न भवति**, गुणाना साम्येन ये सदृशाः, न क्रियासाम्येन, ते सति गुणसाम्ये सदृशास्तेषां बन्धो नास्ति, पूर्वोपवादविशेषसमर्थनार्थमेवेद–न जघन्यगुणानाम् (सू० ३३) इत्यभिधाय तद्विशेषमपवदते, त चापोद्यमानमुदाहरणेन स्पष्टयति । तद् यथेत्युदाहरणोपन्यासः, तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन तुल्यगुणरूक्षस्य तुल्यगुणरूक्षेणेति सामान्योपन्यास. समस्तैकगुणस्निग्ध-

रूक्षादिसमगुणविकल्पसङ्ग्रहार्थः। तुल्यगुणः स्निग्धो यस्य स तुल्यगुणस्निग्धः, तुल्यः स्नेहगुणो यस्येत्यर्थः, तस्यानेन सदृशेनैव तुल्यगुणस्निग्धेन बन्धो नास्ति, परस्पर परिणतिशक्तेरभावात्, तुल्यबलगुणमल्लद्वयान्योन्यानभिघातवद्, एकगुणस्निग्धो हि नैकगुणस्निग्धेन बध्यते, तथाऽनन्तपर्यवसानाद् द्विगुणादिस्निग्धाः द्विगुणादिस्निग्धैः समगुणैरनन्तपर्यवसानैः सह न बध्यन्ते, एवमेकगुणरूक्षोऽप्येकगुणरूक्षेण सह न बध्यते, तुल्यदुर्बलगुणमल्लद्वयान्योन्यानभिघातवदेव, तथा द्विगुणादिरूक्षा न द्विगुणादिरूक्षैरनन्तावसानैः सह बन्धमनुभवन्तीति ॥

**भा०—अत्राह—सदृशग्रहणं किमपेक्षत इति ? । अत्रोच्यते—गुणवैषम्ये सदृशानां बन्धो भवतीति ॥ ३४ ॥**

टी०—**अत्राह—सदृशग्रहण किमपेक्षत इति** । एव मन्यते प्रष्टा, गुणसाम्ये सति बन्धो न भवति, येपा च समा गुणाः प्रकर्षापकर्षवृत्ताः प्रतिविशिष्टसङ्ख्यावच्छिन्नास्ते नियमेन गुणैः सदृशाः, इत्येतावताऽभिलपितेऽर्थे सिद्धे सदृशग्रहणमतिरिच्यमानमपरार्थापेक्षि भवति, तं चापरमर्थमजानानः प्रश्नयति—किमपेक्षते सदृशग्रहणमिति, आचार्योऽपि विशिष्टार्थप्रतिपत्तये सदृशग्रहण चेतसि निधायाह—**अत्रोच्यत इति** । **गुणवैषम्ये सदृशाना बन्धो भवतीति**, स्नेहगुणवैषम्ये रूक्षगुणवैषम्ये च बन्धः समस्ति, केषामत आह—**सदृशानामिति** । एनमर्थं सदृशग्रहणमपेक्षते, सादृश्य च स्नेहगुणमात्रनिबन्धन रौक्ष्यगुणमात्रनिबन्धनं च सङ्ख्यानमाश्रित्य ग्राह्यम्, अतः सदृशानामपि स्नेहगुणसामान्येन रौक्ष्यगुणसामान्येन च प्रकर्षापकर्षवृत्ततद्गुणवैषम्ये सति भवत्येव बन्धः, तद्यथा–एकगुणस्निग्धस्त्रिगुणस्निग्धेन, द्विगुणस्निग्धश्चतुर्गुणस्निग्धेन, त्रिगुणस्निग्धः पञ्चगुणस्निग्धेन, चतुर्गुणस्निग्धः षड्गुणस्निग्धेनेत्येव यावदनन्तगुणस्निग्धो विषमगुण इति । अन्ये त्वभिदधति सूरयः—एकगुणस्निग्धस्य द्विगुणस्निग्धेनैकगुणरूक्षस्य द्विगुणरूक्षेणेति भावनीयम्, एतच्च सम्प्रदायेनागमोपनिबन्धदर्शनेन च प्रायो विसंवदति इत्यनादरः ॥ ३४ ॥

**भा०—अत्राह—किमविशेषेण गुणवैषम्ये सदृशानां बन्धो भवतीति ? । अत्रोच्यते—**

टी०—**अत्राहेत्यादिः** सम्बन्धप्रतिपादनपरो ग्रन्थः, **किमविशेषेण गुणवैषम्ये सदृशाना बन्धो भवतीति**, यद्यविशेषेण तत एकगुणस्निग्धस्य द्विगुणस्निग्धेनापि बन्धप्रसङ्गोऽनिष्ट चैतदा( दित्या ? )रेकमाणे प्रष्टरि सूरिराह—**अत्रोच्यत इति**, न सर्वेषामेव, सदृशाना, किं तर्हि ?

---

१-२ ' न्याभिघात० ' इति ग पाठ । ३ 'सामान्यगुणेन' इति ग-पाठ । ४ 'तद्यवि' इति ग-पाठ ।

## सूत्रम्—द्व्यधिकादिगुणानां तु ॥ ५-३५ ॥

भा०—द्व्यधिकादिगुणानां तु सदृशानां बन्धो भवति ।

टी०—द्व्यधिकादिगुणानां तु सदृशाना बन्धो भवतीत्यादि भाष्यम् । द्वाभ्यां गुणविशेषाभ्यामन्यस्मादधिको यः परमाणुः स आदिर्येषा ते द्व्यधिकादिगुणाः । गुणशब्दोऽत्र गुणिवचनः । गुणवन्तो गुणाः परमाणव इत्यर्थः । तेषा द्व्यधिकादिगुणानामणूनां सदृशानां बन्धो भवति, सदृशानामिति स्नेहसामान्य रूक्षसामान्य चाश्रित्य सादृश्यं व्याख्येयम् ।

भा०—तद्यथा—स्निग्धस्य द्विगुणाधिकस्निग्धेन, द्विगुणाद्यधिकस्निग्धस्य एकगुणस्निग्धेन, रूक्षस्यापि द्विगुणाद्यधिकरूक्षेण, द्विगुणाद्यधिकरूक्षस्य एकगुणरूक्षेण, एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति । अत्र तुशब्दो व्यावृत्तिविशेषणार्थः, प्रतिषेध व्यावर्तयति बन्धं च विशेषयति ॥ ३५ ॥

टी०—तद्यथा–स्निग्धस्येत्यादिनोदाहरति । [एकगुण]स्निग्धस्येत्यनुक्तेऽपि सङ्ख्या गम्यते गुणश्च सामर्थ्यात्, द्विगुणाद्यधिकस्निग्धेनाणुना, द्वाभ्या स्नेहगुणविशेषाभ्यामेकगुणस्निग्धादधिको यस्तेन सहास्ति बन्धः, यथैकगुणस्निग्ध एकस्तदन्यस्त्रिगुणस्निग्धः, अत्रैकगुणस्निग्धस्यैकः समानो गुणस्त्रिगुणस्निग्धे (स्कन्धे) अणौ वा शेषेण गुणद्वयेनाधिकः, द्विगुणाद्यधिकस्निग्धेनेत्यादिग्रहणादेकगुणस्निग्धस्य चतुर्गुणपञ्चगुणस्निग्धेनापि बन्धसिद्धिः, तथा द्विगुणाद्यधिकस्निग्धस्यैकगुणस्निग्धेन सह बन्धसम्भवः॥ ननु च प्रथमविकल्पान्नास्ति कश्चिद् विशेषोऽस्य स्फुटः, सत्य, न कश्चिद् भेदः, तथापि तु बन्धो द्व्यादिवृत्तिः, तत्र बध्यमानयोर्बध्यमानानां वा षष्ठ्यन्तत्वे तृतीयान्तत्वे वा बन्धाविशेष इति प्रतिपत्त्यर्थमुभययोच्चारण चकार भाष्यकारः॥ रूक्षस्यापीत्यादिभाष्यमुक्तप्रकारेणैव गमनीयम् , एव द्व्यधिकादिगुणाना स्नेहवतां रौक्ष्यवतां च यथोक्तलक्षणो बन्धो भवतीत्युच्यते, प्रतिषेधव्यावृत्तिप्रदर्शनार्थं भवति तुशब्दोपादानम् । द्व्यधिकादिगुणाना बन्धाभ्यनुज्ञाने चार्थापत्तिलभ्यफलप्रदर्शनार्थमिदमाह—एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति, प्रतिविशिष्टपरिणतिशक्तेरभावात् , एकगुणस्निग्धस्य हि द्विगुणस्निग्धोऽणुरेकगुणाधिकः, द्विगुणस्निग्धस्य त्रिगुणस्निग्ध एकगुणाधिकः, त्रिगुणस्निग्धस्य चतुर्गुणस्निग्ध एकाधिक इत्यादि यावदनन्तगुण एकाधिक इति, एव रूक्षस्यापि वाच्यम्, एकादिगुणाधिकयोरित्यत्रादिग्रहणाद् द्विगुणस्य त्रिगुणेन सह नास्ति बन्धः, तत्रापि द्विगुणश्चैकगुणाधिकश्चेति द्विवचनम्, एव शेषविकल्पयोजनमपि कार्यम्, तुशब्दः कैमर्थक्यात् सूत्र इत्याशङ्किते भाष्यकृदाह—अत्र तुशब्दो व्यावृत्तिविशेषणार्थः ॥ तुशब्दस्यानेकार्थवृत्तित्वे सत्यप्यत्र सूत्रे व्यावृत्तिर्विशेषण चोभयमर्थः परिगृह्यते, व्यावृत्तिश्च विशेषण च व्यावृत्तिविशेषणे अर्थस्ते यस्य स तथोक्तः, तत्र व्यावृत्तिः–निवृत्तिः, विशेष्यतेऽनेनेति विशेषणं, तदर्थो यस्यासौ व्यावृत्तिविशेषणार्थः, कस्य पुनर्व्यावृत्तिः किं वा विशेष्यमाणमित्याह—प्रतिषेधं

व्यावर्तयति वन्धं च विशेषयतीति । न जघन्यगुणानामिति प्रकृतप्रतिषेधस्त व्यावर्तयति, यथाऽधिकृत च वन्ध विशिनष्टि, गुणवैषम्ये सति सदृशाना गुणद्वयाधिकाना वन्धो भवतीत्येवविशेषणार्थः, ततश्च व्यावृत्ते प्रतिषेधे वन्धे च विशेषिते द्व्यधिकादिगुणाना वन्धः सिद्धो निरपवाद इति ॥ आगमगाथासवादी चाय सूत्रचतुष्टयार्थः—

"निद्धस्स निद्धेण दुआधिएण, लुक्खस्स लुक्खेण दुआधिएण ।
निद्धस्स लुक्खेण उवेति वधो, जहण्णवज्जो विसमे समे वा ॥१॥"—प्रज्ञा० गा० २००

गुणवैषम्ये सदृशाना द्व्यधिकादिगुणाना तु वन्धो भवतीत्यस्य वाचक गाथाशकलमाद्य, स्निग्धस्य स्निग्धेन सह रूक्षस्यापि रूक्षेण सहेति, ततश्च "गुणसाम्ये सदृशाना" (सू० ३४) भवति वन्ध इत्येतत् सूत्र लब्धम् । अथ स्निग्धरूक्षयोः परस्परेण कथमित्याह—पाश्चात्यमर्धम् । एतेन च "स्निग्धरूक्षत्वाद् वन्धः" (सू० ३२), "न जघन्यगुणानाम्" (सू० ३३) इति सूत्रद्वयपरिग्रहः । स्निग्धगुणरूक्षयोश्च जघन्यगुणवर्जः परस्परेण विषमगुणयोः समगुणयोश्च वन्धो भवतीति ॥३५॥

भा०—अत्राह—परमाणुषु स्कन्धेषु च ये स्पर्शादयो गुणास्ते किं व्यवस्थितास्तेषु आहोस्विदव्यवस्थिता इति ? । अत्रोच्यते—अव्यवस्थिताः । कुतः? परिणामात् । अत्राह—द्वयोरपि वध्यमानयोर्गुणवत्त्वे सति कथं परिणामो भवतीति ? ॥ उच्यते—

टी०—अत्राह–परमाणुष्वित्यादिना ग्रन्थेन सूत्र सम्बध्नाति । अत्रेत्यौत्सर्गिके वन्धलक्षणे सापवादे प्रतिपादिते पृच्छत्यजानानः, परिणामविशेषो हि वन्धः, स च स्निग्धे रूक्षलक्षणपरिणामान्तरापेक्षः, अतः परमाणुषु ये स्पर्शादिगुणपरिणामाः स्कन्धेषु वा शब्दादयस्ते किं नित्याः—सर्वदा व्यवस्थितास्तेषु परमाण्वादिष्वाहोस्विदव्यवस्थिता–भूत्वा पुनर्न भवन्तीति ? । अयमभिप्रायः प्रश्नयितुः–परमाणवः सहन्यमाना द्विप्रदेशादिकस्कन्धाकृत्या परिणमन्ते परिमण्डलादिपञ्चप्रकारसस्थानरूपेण वेति, तत्र यदि व्यवस्थिताः परमाणुषु परिणामाः स्पर्शादयः स्कन्धेषु वा स्पर्शादिशब्दादयस्ततस्तेषां व्यवस्थितत्वात् सर्वदा नोत्पादो न विनाशः, तौ चान्तरेण स्निग्धरूक्षगुणयोरण्वोः परिणामाभावे तदवस्थयोः कुतो द्व्यणुकादिस्कन्धपरिणामः? स्कन्धेषु वा स्पर्शादिशब्दादिपरिणामस्यैकस्यैव नित्यतयेष्टत्वात् शेषस्पर्शादिशब्दादिपरिणामाभावः । अथाव्यवस्थिताः,सर्वमिष्यमाणमुपपन्नम्, पूर्वकपरिणामत्यागेनोत्तरपरिणामान्तराभ्युपगमे स्पर्शादयोऽन्ये चान्ये च स्पर्शादिशब्दादयश्च क्षेत्रकालद्रव्यभावपरिणामविशेषाः स्युरित्यवगम्येत यथापरिणाम वस्त्विति, तन्न जाने कथमेतदिति, सति चाप्यव्यवस्थितत्वे किं समगुणः समगुणतयैव परिणमयत्युत विषमगुणतयाऽपीति सन्दिहान प्रतीदमत्रोच्यते–अव्यव-

१ ' स्निग्धस्य स्निग्धेन द्व्याधिकेन, रूक्षस्य रूक्षेण द्व्याधिकेन ।
स्निग्धस्य रूक्षेणोपैति वन्धो, जघन्यवर्जो विषम समो वा ॥
२ ' पातोत्थ ' इति क पाठ । ३ ' विषमतया' इति क पाठ ।

## सूत्रम्—द्व्यधिकादिगुणानां तु ॥ ५–३५ ॥

**भा०—द्व्यधिकादिगुणाना तु सदृशाना बन्धो भवति ।**

टी०—**द्व्यधिकादिगुणानां तु सदृशानां बन्धो भवतीत्यादि** भाष्यम् । द्वाभ्यां गुणविशेषाभ्यामन्यस्मादधिको यः परमाणुः स आदिर्येषा ते द्व्यधिकादिगुणाः । गुणशब्दोऽत्र गुणिवचनः । गुणवन्तो गुणाः परमाणव इत्यर्थः । तेषा द्व्यधिकादिगुणानामणूनां सदृशानां बन्धो भवति, सदृशानामिति स्नेहसामान्य रूक्षसामान्य चाश्रित्य सादृश्यं व्याख्येयम् ।

**भा०—तद्यथा—स्निग्धस्य द्विगुणाधिकस्निग्धेन , द्विगुणाद्यधिकस्निग्धस्य एकगुणस्निग्धेन, रूक्षस्यापि द्विगुणाद्यधिकरूक्षेण, द्विगुणाद्यधिकरूक्षस्य एकगुणरूक्षेण, एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति। अत्र तुशब्दो व्यावृत्तिविशेषणार्थः, प्रतिषेध व्यावर्तयति बन्धं च विशेषयति ॥ ३५ ॥**

टी०—तद्यथा–स्निग्धस्येत्यादिनोदाहरति। [एकगुण]स्निग्धस्येत्यनुक्तेऽपि सङ्ख्या गम्यते गुणश्च सामर्थ्यात्, द्विगुणाद्यधिकस्निग्धेनाणुना, द्वाभ्या स्नेहगुणविशेषाभ्यामेकगुणस्निग्धादधिको यस्तेन सहास्ति बन्धः, यथैकगुणस्निग्ध एकस्तदन्यस्त्रिगुणस्निग्धः, अत्रैकगुण स्निग्धस्यैकः समानो गुणस्त्रिगुणस्निग्धे (स्कन्धे) अणौ वा शेषेण गुणद्वयेनाधिकः, द्विगुणाद्यधिकस्निग्धेनेत्यादिग्रहणादेकगुणस्निग्धस्य चतुर्गुणपञ्चगुणस्निग्धेनापि बन्धसिद्धिः, तथा द्विगुणाद्यधिकस्निग्धस्यैकगुणस्निग्धेन सह बन्धसम्भवः॥ननु च प्रथमविकल्पान्नास्ति कश्चिद् विशेषोऽस्य स्फुटः, सत्य, न कश्चिद् भेदः, तथापि तु बन्धो द्व्यादिवृत्तिः, तत्र बध्यमानयोर्बध्यमानानां वा षष्ठ्यन्तत्वे तृतीयान्तत्वे चा बन्धाविशेष इति प्रतिपत्त्यर्थमुभयथोच्चारण चकार भाष्यकारः॥ रूक्षस्यापीत्यादिभाष्यमुक्तप्रकारेणैव गमनीयम् , एव द्व्यधिकादिगुणाना स्नेहवतां रौक्ष्यवतां च यथोक्तलक्षणो बन्धो भवतीत्युच्यते, प्रतिषेधव्यावृत्तिप्रदर्शनार्थं भवति तुशब्दोपादानम् । द्व्यधिकादिगुणाना बन्धाभ्यनुज्ञाने चार्थापत्तिलभ्यफलप्रदर्शनार्थमिदमाह—**एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति**, प्रतिविशिष्टपरिणतिशक्तेरभावात् , एकगुणस्निग्धस्य हि द्विगुणस्निग्धोऽणुरेकगुणाधिकः,द्विगुणस्निग्धस्य त्रिगुणस्निग्ध एकगुणाधिकः, त्रिगुणस्निग्धस्य चतुर्गुणस्निग्ध एकाधिक इत्यादि यावदनन्तगुण एकाधिक इति, एव रूक्षस्यापि वाच्यम्, एकादिगुणाधिकयोरित्यत्रादिग्रहणाद् द्विगुणस्य त्रिगुणेन सह नास्ति बन्धः, तत्रापि द्विगुणश्चैकगुणाधिकश्चेति द्विवचनम्, एव शेषविकल्पयोजनमपि कार्यम्, तुशब्दः कैमर्थक्यात् सूत्र इत्याशङ्किते भाष्यकृदाह—**अत्र तुशब्दो व्यावृत्तिविशेषणार्थः** ॥ तुशब्दस्यानेकार्थवृत्तित्वे सत्यप्यत्र सूत्रे व्यावृत्तिर्विशेषण चोभयमर्थ. परिगृह्यते, व्यावृत्तिश्च विशेषण च व्यावृत्तिविशेषणे अर्थस्ते यस्य स तथोक्त., तत्र व्यावृत्ति'–निवृत्तिः, विशेष्यतेऽनेनेति विशेषण, तदर्थो यस्यासौ व्यावृत्तिविशेषणार्थः, कस्य पुनर्व्यावृत्तिः किं वा विशेष्यमाणमित्याह—**प्रतिषेधं**

कदाचित् परिणामकः, स्वगतेन रूक्षगुणेन स्नेहगुणमात्मसात्करोति परिणामयतीति, गुणसाम्ये तु सदृशाना बन्धप्रतिषेधः, इमौ तु विसदृशावेको द्विगुणस्निग्धोऽन्यो द्विगुणरूक्षः, स्नेहरूक्षयोश्च भिन्नजातीयत्वान्नास्ति सादृश्यम्, तथाऽधिकगुणः-त्रिगुणस्निग्धो हीनगुणस्य-एकगुणस्निग्धस्य परिणमयिता, अनेन ह्येकगुणस्निग्धस्त्रिगुणस्निग्धतामापद्यते, कस्तूरिकाशानुविद्धविलेपनवत्, एतावच्च बन्धजात समगुणयोर्विषमगुणयोर्वा परिणम्यत्व च, इतरमात्मसात्कुर्वन् परिणमत इति परिणामकः, परिणम्यगुणसङ्ख्यामाक्षिप्य वा स्वगुणसङ्ख्यामजहत् परिणमत इति परिणामकः, अथवा परिणमनं परिणामस्त करोति-परिणामयति परिणामकः, आत्मरूपेण परस्यापि परिणाम करोतीत्येव प्रकृत्यन्तणिजन्तत्वयोर्न कश्चिद् विरोध इति ॥ ३६ ॥

भा०—अत्राह–उक्तं भवता (अ० ५, सू० २)—द्रव्याणि जीवाश्चेति। तत् किमुद्देशात एव द्रव्याणां प्रसिद्धिराहोस्विल्लक्षणतोऽपीति ?। अत्रोच्यते–लक्षणतोऽपि प्रसिद्धिः, तदुच्यते—

टी०—अत्राह—उक्तं भवतेत्यादिना सूत्रसम्बन्धमाचष्टे। अत्र शास्त्रे भवताऽभिहितं पञ्चमाध्याये वा–द्रव्याणि जीवाश्च(अ०५,सू०२)इति, धर्माधर्माकाशपुद्गला द्रव्याणि जीवाश्चेत्येव पञ्च द्रव्याणि प्रथममुद्दिष्टानि–सामान्येनोक्तानीति, न तु द्रव्यलक्षणमपदिष्टम्, एवलक्षणक द्रव्यमिति, यस्माद् द्रव्यशब्देनोक्ता धर्मादयः तस्मात् किमुद्देशात एव–सामान्याभिधानमात्रादेव द्रव्याणां–धर्मादीना स्वरूपप्रसिद्धिः—स्वरूपपरिज्ञानमाहोस्विदस्ति किञ्चिद् वैशेषिकम्-असाधारणलक्षणमिति ?। एव मन्यते–प्रतिव्यक्ति प्रतिनियमात् लक्षणस्य यथाऽवस्थितलक्ष्यपरिच्छेदित्वादुद्देशतस्तावन्नेष्यते प्रसिद्धिः, किं तर्हि ? लक्षणत इष्यते, ततश्च यतो लक्षणतः प्रसिद्धिर्धर्मादिद्रव्ये तदपदेष्टव्यम्, यथाऽऽत्मनोऽसाधारण साकारानाकारोपयोगलक्षणम्, सामान्यविशेषसञ्ज्ञाव्यवहार्याश्च सर्वे प्रावचनाः पदार्था इति ॥ ननु चोत्पादव्ययध्रौव्ययुक्तं सदिति सामान्यलक्षणमुक्तं(सू०२९), सत्यमेतत्, अमुना तु प्रश्नप्रसरेण विशेषलक्षणमभिधापयति प्रश्नयिता–किं द्रव्य के वा धर्मा इति, द्रव्यस्य धर्माणा च विशेषावगतिजिज्ञासार्थं प्रश्नः, आचार्योऽपि वैशेषिक लक्षणं मनसि सन्निवेश्यात्रोच्यत इत्याह, किमुच्यते ?–लक्षणतोऽपि प्रसिद्धिः, अपिशब्दादुद्देशतोऽपि असाधारण लक्षण, तस्माल्लक्षणाद् यथा द्रव्यपदार्थे प्रसिद्धिः—विशिष्टविज्ञानोत्पादो विज्ञातुर्भवति तथा तल्लक्षणमुच्यते ॥

## सूत्रम्—गुणपर्यायवद् द्रव्यम् ॥ ५–३७ ॥

भा०—गुणान् लक्षणतो वक्ष्यामः(सू०४०)। भावान्तरं संज्ञान्तरं च पर्यायः। तदुभयं यत्र विद्यते तद् द्रव्यम्। गुणपर्याया अस्य सन्त्यस्मिन् वा सन्तीति गुणपर्यायवत् ॥ ३७ ॥

---

१ 'च' इति क-पाठ ।

स्थिताः परमाणुस्कन्धेषु स्पर्शादयः, स्पर्शादिशब्दादयश्चेति, अनवस्थितत्वे प्रतिज्ञाते पुनः प्रश्नयति–कुतः पुनरनवस्थितत्वम् ? एव मन्यते–किं प्रतिज्ञामात्रेणानवस्थितत्वमुत काचिद् युक्तिरप्यस्तीति ? एवमाशङ्किते युक्तिमाह—परिणामादिति । "तद्भावलक्षणः परिणामो" वक्ष्यते (सू० ४१), स एव हि परमाणुः स्कन्धो वा द्रव्यत्वादिजातिस्वभावमजहत् स्पर्शान्तरादिगुणं शब्दान्तरादिगुण प्रतिपद्यते, स्पर्शादिसामान्यमजहतः परमाण्वादयः स्पर्शादिविशेषानासादयन्ति, अतोऽवस्थितानवस्थितत्वमेषां स्पर्शादीनाम्, परिणन्तारो हि स्वशक्तिपाटवभाजो मरिचलवणहिङ्ग्वादयः परिणम्य वस्तु कथिततक्रादिस्वाद्वाद्याकारेणात्मसात्कुर्वन्तो दृष्टाः, केचित् तु दधिगुडादयः परिणमनशक्तिस्वाभाव्यात् परस्परपरिणतिहेतवः, पूर्वेषामेकतः परिणतिशक्तिः पाटवातिशयात्, एव परिणामादनवस्थिताः स्पर्शादिशब्दादयः, परिणामानवस्थितत्वे प्रतिपादिते लब्धावकाशः पुनः **अत्राह–द्वयोरपि बध्यमानयोर्गुणवत्त्वे सति कथं परिणामो भवतीति ?** । एव मन्यते–भवतु परिणतिविशेषादनवस्थितं गुणवत्त्वम्, अण्वोस्तु बध्यमानयोर्गुणवत्त्वे सति तुल्यगुणयोर्विषमगुणयोर्वा सङ्ख्यया द्विगुणस्निग्धस्य -द्विगुणरूक्षस्य वेत्यादेस्तथैकगुणस्निग्धस्य त्रिगुणस्निग्धस्य चेत्यादेरेकगुणरूक्षस्य त्रिगुणरूक्षादेः कथं–केन प्रकारेण परिणामो भवति ?। अयमभिप्रायः—किं द्विगुणस्निग्धो द्विगुणरूक्ष स्नेहात्मतया परिणमयत्युत द्विगुणरूक्षो द्विगुणस्निग्धं रूक्षात्मतया परिणमयतीति ? एव शेषविकल्पा द्रष्टव्याः । तथा किमेकगुणस्निग्धस्त्रिगुणस्निग्धमात्मसात्करोतीत्येवं त्रिगुणस्निग्धः एकगुणस्निग्धमित्यादिसन्देहविच्छेदायात्रोच्यते—

## सूत्रम्—बन्धे समाधिकौ पारिणामिकौ[३] ॥ ५–३६ ॥

टी०—बन्धन बन्धः–सयोगः, समः–तुल्यः, स च गुणतः परिगृह्यते, एव च यस्यासौ समस्तस्येतरोऽपि समो भवति, अधिकगुणोऽपि यदपेक्षयाऽऽधिक्य लभते स हीनः, सूत्रे च साक्षात् **समाधिकौ पारिणामिकावेव** गृहीतौ, न तु परिणाम्यः समो हीनगुणो वेत्यतो बन्धशब्दोपादानादिष्टलाभः, सम्बन्धो हि व्यादिवृत्तिरित्युक्तम्, एव च द्वितीयः समो हीनश्च सामर्थ्याद् बन्धपरिप्रापित इति, एतदेव भाष्येण दर्शयति—

**भा०—बन्धे सति समगुणस्य सेमगुणपरिणामको[४] भवति । अधिकगुणो हीनस्येति** ॥ ३६ ॥

टी०—सति बन्धे-सद्बद्धलक्षणे विस्रसाद्वारेण तुल्यगुणो द्विगुणस्निग्धस्तुल्यगुण[५]स्तद्विगुणरूक्षस्य परिणामकः–स्वमतेन स्नेहगुणेन रूक्षगुणमात्मसात्करोति, एव रूक्षगुणः

---

१ 'जहन्त' इति ग पाठ । २ 'शक्तिपाटवा' इति क पाठ । ३ 'णामकौ' इति क ख-पाठ ।
४ 'समगुणः परि०' इति प्रतिभाति । ५ 'गुणस्य द्विगुण०' इति प्रतिभाति ।

कदाचित् परिणामकः, स्वगतेन रूक्षगुणेन स्नेहगुणमात्मसात्करोति परिणामयतीति, गुणसाम्ये तु सदृशाना बन्धप्रतिषेधः, इमौ तु विसदृशावेको द्विगुणस्निग्धोऽन्यो द्विगुणरूक्षः, स्नेहरूक्षयोश्च भिन्नजातीयत्वान्नास्ति सादृश्यम्, तथाऽधिकगुणः-त्रिगुणस्निग्धो हीनगुणस्य-एकगुणस्निग्धस्य परिणमयिता, अनेन ह्येकगुणस्निग्धस्त्रिगुणस्निग्धतामापद्यते, कस्तूरिकाद्यनुविद्धविलेपनवत्, एतावच्च बन्धजात समगुणयोर्विषमगुणयोर्वा परिणम्यत्व च, इतरमात्मसात्कुर्वन् परिणमत इति परिणामकः, परिणम्यगुणसङ्ख्यामाक्षिप्य वा स्वगुणसङ्ख्यामजहत् परिणमत इति परिणामकः, अथवा परिणमनं परिणामस्त करोति-परिणामयति परिणामकः, आत्मरूपेण परस्यापि परिणाम करोतीत्येव प्रकृत्यन्तणिजन्तत्वयोर्न कश्चिद् विरोध इति ॥ ३६ ॥

भा०—अत्राह-उक्तं भवता (अ० ५, सू० २)—द्रव्याणि जीवाश्चेति । तत् किमुद्देशत एव द्रव्याणां प्रसिद्धिराहोस्विल्लक्षणतोऽपीति ? । अत्रोच्यते-लक्षणतोऽपि प्रसिद्धिः, तदुच्यते—

टी०—अत्राह—उक्तं भवतेत्यादिना सूत्रसम्बन्धमाचष्टे । अत्र शास्त्रे भवताऽभिहितं पञ्चमाध्याये वा-द्रव्याणि जीवाश्च(अ०५,सू०२)इति, धर्माधर्माकाशपुद्गला द्रव्याणि जीवाश्चेत्येवं पञ्च द्रव्याणि प्रथममुद्दिष्टानि-सामान्येनोक्तानीति, न तु द्रव्यलक्षणमपदिष्टम्, एवलक्षणक द्रव्यमिति, यस्माद् द्रव्यशब्देनोक्ता धर्मादयः तस्मात् किमुद्देशत एव-सामान्याभिधानमात्रादेव द्रव्याणां-धर्मादीना स्वरूपप्रसिद्धिः-स्वरूपपरिज्ञानमाहोस्विदस्ति किञ्चिद् वैशेषिकम्-असाधारणलक्षणमिति ?। एव मन्यते-प्रतिव्यक्ति प्रतिनियमात् लक्षणस्य यथाऽनस्थितलक्ष्यपरिच्छेदित्वादुद्देशतस्तावन्नेष्यते प्रसिद्धिः, किं तर्हि ? लक्षणत इष्यते, ततश्च यतो लक्षणतः प्रसिद्धिर्धर्मादिद्रव्ये तदपदेष्टव्यम्, यथाऽऽत्मनोऽसाधारण साकारानाकारोपयोगलक्षणम्, सामान्यविशेषसञ्ज्ञाव्यवहार्याश्च सर्वे प्रावचनाः पदार्था इति ॥ ननु चोत्पादव्ययध्रौव्ययुक्त सदिति सामान्यलक्षणमुक्तं(सू०२९), सत्यमेतत्, अमुना तु प्रश्नप्रसरेण विशेषलक्षणमभिधापयति प्रश्नयिता-किं द्रव्यं के वा धर्मा इति, द्रव्यस्य धर्माणा च विशेषावगतिजिज्ञासार्थं प्रश्नः, आचार्योऽपि वैशेषिक लक्षणं मनसि सन्निवेश्यात्रोच्यत इत्याह, किमुच्यते ?-लक्षणतोऽपि प्रसिद्धिः, अपिशब्दादुद्देशतोऽपि असाधारणं लक्षण, तस्माल्लक्षणाद् यथा द्रव्यपदार्थे प्रसिद्धिः-विशिष्टविज्ञानोत्पादो विज्ञातुर्भवति तथा तल्लक्षणमुच्यते ॥

## सूत्रम्—गुणपर्यायवद् द्रव्यम् ॥ ५-३७ ॥

भा०—गुणान् लक्षणतो वक्ष्यामः(सू०४०)। भावान्तरं संज्ञान्तरं च पर्यायः। तदुभयं यत्र विद्यते तद् द्रव्यम् । गुणपर्याया अस्य सन्त्यस्मिन् वा सन्तीति गुणपर्यायवत् ॥ ३७ ॥

१ 'च' इति क पाठ ।

स्थिताः परमाणुस्कन्धेषु स्पर्शादयः, स्पर्शादिशब्दादयश्चेति, अनवस्थितत्वे प्रतिज्ञाते पुनः प्रश्नयति–कुतः पुनरनवस्थितत्वम् ? एव मन्यते–किं प्रतिज्ञामात्रेणानवस्थितत्वमुत काचिद् युक्तिरप्यस्तीति ? एवमाशङ्किते युक्तिमाह—परिणामादिति । "तद्भावलक्षणः परिणामो" वक्ष्यते (सू० ४१), स एव हि परमाणुः स्कन्धो वा द्रव्यत्वादिजातिस्वभावमजहत् स्पर्शान्तरादिगुणं शब्दान्तरादिगुण प्रतिपद्यते, स्पर्शादिसामान्यमजहतः परमाण्वादयः स्पर्शादिविशेषानासादयन्ति, अतोऽवस्थितानवस्थितत्वमेषां स्पर्शादीनाम्, परिणन्तारो हि स्वशक्तिपाटवभाजो मरिचलवणहिङ्ग्वादयः परिणम्य वस्तु कथिततक्रादिस्वाद्वाद्याकारेणात्मसात्कुर्वन्तो दृष्टाः, केचित् तु दधिगुडादयः परिणमनशक्तिस्वाभाव्यात् परस्परपरिणतिहेतवः, पूर्वेषामेकतः परिणतिर्शक्तिः पाटवातिशयात्, एव परिणामादनवस्थिताः स्पर्शादिशब्दादयः, परिणामानवस्थितत्वे प्रतिपादिते लब्धावकाशः पुनः अत्राह–द्वयोरपि बध्यमानयोर्गुणवत्त्वे सति कथं परिणामो भवतीति ? । एवं मन्यते–भवतु परिणतिविशेषादनवस्थित गुणवत्त्वम्, अण्वोस्तु बध्यमानयोर्गुणवत्त्वे सति तुल्यगुणयोर्विषमगुणयोर्वा सङ्ख्यया द्विगुणस्निग्धस्य -द्विगुणरूक्षस्य वेत्यादेस्तथैकगुणस्निग्धस्य त्रिगुणस्निग्धस्य चेत्यादेरेकगुणरूक्षस्य त्रिगुणरूक्षादेः कथ–केन प्रकारेण परिणामो भवति ? । अयमभिप्रायः—किं द्विगुणस्निग्धो द्विगुणरूक्षं स्नेहात्मतया परिणमयत्युत द्विगुणरूक्षो द्विगुणस्निग्ध रूक्षात्मतया परिणमयतीति ? एव शेषविकल्पा द्रष्टव्याः । तथा किमेकगुणस्निग्धस्त्रिगुणस्निग्धमात्मसात्करोतीत्येव त्रिगुणस्निग्धः एकगुणस्निग्धमित्यादिसन्देहविच्छेदायात्रोच्यते—

## सूत्रम्—बन्धे समाधिकौ पारिणामिकौ[3] ॥ ५–३६ ॥

टी०—बन्धनं बन्धः–सयोगः, समः–तुल्यः, स च गुणतः परिगृह्यते, एवं च यस्यासौ समस्तस्येतरोऽपि समो भवति, अधिकगुणोऽपि यदपेक्षयाऽऽधिक्य लभते स हीनः, सूत्रे च साक्षात् समाधिकौ पारिणामिकावेव गृहीतौ, न तु परिणाम्यः समो हीनगुणो वेत्यतो बन्धशब्दोपादानादिष्टलाभः, सम्बन्धो हि द्व्यादिवृत्तिरित्युक्तम्, एव च द्वितीयः समो हीनश्च सामर्थ्याद् बन्धपरिप्रापित इति, एतदेव भाष्येण दर्शयति—

भा०—बन्धे सति समगुणस्य समगुणपरिणामको[4] भवति । अधिकगुणो हीनस्येति[5] ॥ ३६ ॥

टी०—सति बन्धे-सङ्घट्टलक्षणे विस्रसाद्वारेण तुल्यगुणो द्विगुणस्निग्धस्तुल्यगुणस्तद्विगुणरूक्षस्य परिणामकः–स्वमतेन स्नेहगुणेन रूक्षगुणमात्मसात्करोति, एव रूक्षगुणः

१ ' जहन्त ' इति ग पाठ । २ ' शक्तिपाटवा' इति क पाठ । ३ ' णामकौ' इति क ख-पाठः ।
४ 'समगुणः परि०' इति प्रतिभाति । ५ 'गुणस्य द्विगुण०' इति प्रतिभाति ।

भेदेन व्यवह्रियते चैतन्यमात्मनीति। एव सैव पुद्गलद्रव्यजातिः स्वरूपमजहती समासादितत्तद्गुणविशेषरूपादिपिण्डादिव्यपदेशे हेतुरित्यतः कथञ्चिद् भेदाभेदस्वरूप गुणपर्यायवद् द्रव्यमुच्यते, तथा धर्माधर्माकाशजीवद्रव्याण्यपि गुणपर्यायवन्ति भावयितव्यानि प्रागभिहितक्रमेण, द्रव्य हि मव्य योग्य सहक्रमभुवां गुणपर्यायाणाम्, अत्र चागुरुलघुप्रभृतयः सहभुवो गुणाः, पर्यायाः क्रमभुवः, पुनर्गतिस्थित्यवगाहज्ञानदर्शननारकादयो गुणपर्यायाः पूर्वमेव भाविता इति ॥ ३७ ॥

एवं गुणपर्यायपरिणामि द्रव्यलक्षणमिति प्रपञ्चे निर्णीते पर आशङ्कते—धर्माधर्मादीनि द्रव्याणि पञ्च स्वपरिणामलक्षणगुणपर्यायात्मकानि व्यावर्णितविविधोपकाराणि प्रदर्शितानि, तत्र कालस्यापि पूर्वमुपकारो वर्णित एव वर्तनादिगुणपर्यायलक्षणः, स च कालो द्रव्यमित्येव न पूर्वं नाधुना व्याख्यातः, न चोपकारकमन्तरेणोपकारः समस्ति शक्यं वक्तुम्, वर्तनादिरुपकारः सोपकारकः स्थित्यादिवदुपकारत्वात्, तत् किमयं स्मृतिप्रमोषो युष्माकं येन विविक्तोपकाराधारः कालो द्रव्य नोक्तः? आहोस्विद् धर्मादिद्रव्यपञ्चकसाध्य एवायं वर्तनादिव्यापार इति विरचितप्रश्ने श्रोतरि सिद्धसाध्यतोद्विभावयिषाद्वारेण सूरिराह—

कालस्य द्रव्यत्वम्　　सूत्रम्—कालश्चेत्येके ॥ ५-३८ ॥

टी०—विशिष्टमर्यादानच्छिन्नोर्ध्वाधोऽर्धतृतीयद्वीपाभ्यन्तरवर्तिजीवादिद्रव्यैः परिणमद्भिः स्वत एव कल्पते गम्यते ग्रथ्यतेऽपेक्ष्यते कारणतयाऽसाविति कालोऽपेक्षाकारणम्, बलाकाप्रसवे गर्जितध्वनिवत्, पापविरतौ वा प्रबोधवत्, चशब्दो द्रव्याकर्षणार्थः, कालश्च द्रव्य षष्ठं भवति, इतिशब्द एवशब्दार्थे, एवमिति युक्त्यभिधानेन प्रकारान्तरेण च न निर्युक्तिक द्रव्यत्वमाचक्षते कालस्य, एके इत्यसहायार्थ एकशब्दः, एकस्य नयस्य भेदलक्षणस्य प्रतिपत्तारः तदुपयोगानन्यत्वादेकेऽनपेक्षितद्रव्यास्तिकनयदर्शनाः कालश्च द्रव्यान्तर भवतीत्याचक्षते। एतदेव भाष्येण सोपपत्तिक स्फुटयति—

भा०—एके त्वाचार्या व्याचक्षते—कालोऽपि द्रव्यमिति ॥ ३८ ॥

टी०—एके त्वाचार्या इत्यादिना। एके नयवाक्यान्तरप्रधाना विशेषेणाचक्षते—व्यक्तीकुर्वन्ति युक्त्या, परापरप्रत्ययाभिधाने तावदत्यन्तप्रसिद्धत्वान्निर्निमित्ते नाभ्युपगन्तु शक्ये, यश्चानयोर्निमित्त स कालः, तद्यथा—युवस्थविरयोः, सिद्धे परत्वापरत्वे देशकृते परापरदेशयोगात्। अथ दृष्टोऽपरदेशयुक्ते त्वपरस्मिन्नपि स्थविरे परप्रत्ययः पराभिधान च, तथैव च परदेशसयोगात् परस्मिन्नपि यून्यपरप्रत्ययोऽपराभिधान च, तावेतौ व्यतिकरस्वभावावभि-

१ 'सहजक्रम' इति क पाठ। २ 'दृष्टोऽर्वागपर०' इति क-पाठ।

टी०—गुणान् लक्षणतो वक्ष्याम इत्यादि भाष्यम् । सङ्ख्येयासङ्ख्येयानन्तसङ्ख्यया सङ्ख्यायमानत्वाद् गुणाः—शक्तिविशेषाः, त एव क्रमेण सह च भवन्तः सर्वतोमुखत्वाद् भेदाः—पर्यायास्तान् गुणान् पिण्डघटकपालादीन् रूपादींश्च, लक्षणतः असाधारणशक्तिविशेषात्, अभिधास्यामः ( सू० ४० )—" द्रव्याश्रया निर्गुणा गुणाः " इत्यत्र, द्रव्यस्य हि गुणपर्यायाः परिणतिविशेषाः सम्भवन्ति, न तु गुणपर्यायाणा केचिदन्ये गुणपर्यायाः सन्तीत्येव भावयिष्यामः । व्यवहारनयसमाश्रयणेन तु गुणाः पर्याया इति वा भेदेन व्यवहारः प्रवचने, युगपदवस्थायिनो गुणा रूपादयः, अयुगपदवस्थायिनः पर्यायाः, वस्तुतः पर्याया गुणा इत्यैकात्म्यम् । यत आह—

" [1]दो पज्जवे दुगुणिए लभति उ एगाओ दव्वाओ " (आवश्यकनिर्युक्तौ गा०६४) । तथा—
" [2]त तह जाणाति जिणो, अपज्जवे जाणणा नत्थि" (आव० नि० गा० १९४)। तथा—
" [3]दव्वप्पभवा य गुणा न गुणप्पभवाइं दव्वाइ " ( आव० नि० गा० १९२ ) ।

एवमेकमेवेदमिति मन्यमान आह—भावान्तरं संज्ञान्तरं च पर्यायः,भावादन्यो भावो भावान्तरम्, समभिरूढनयाभिप्रायेणेन्दनशकनपूर्दारणादयोऽर्थविशेषा रूपादयश्च भावान्तरा भावभेदाः सज्ञान्तराणा प्रवृत्तौ निमित्तभूताः,सज्ञान्तर चेन्द्रशक्रपुरन्दररूपादि, एवमर्थभेदाः सज्ञाभेदाश्च गुणपर्याया निश्चीयन्त इति, तदेतदुभय व्यवहारनिश्चयात्मक गुणशब्दाभिधेय पर्यायशब्दाभिधेयं च यत्र—यस्मिन् स्थित्यशे विद्यते—सामान्यलक्षणेऽस्ति तद्भावलक्षणपरिणतितयाऽवस्थितलक्षण द्रव्यमिति, अनेन चैतत् प्रतिपाद्यते—द्रव्य परिणामि, गुणपर्यायाः परिणामाः प्रसवव्ययलक्षणा इति । एतदेव स्पष्टयति—गुणपर्याया इत्यादिना । उक्ताः प्रथम गुणपर्याया', अस्यास्मिन् वा विद्यन्त इति मत्वर्थमुपलक्षयति, अस्यैते रूपादयः पिण्डादयश्च तद्भावलक्षणपरिणामाः सन्ति, न जातुचिन्निष्परिणाम द्रव्यमुपतिष्ठते, विकारलक्षणा चेय षष्ठी, यवानां धाना इति यथा, यवास्तु द्रव्यत्वसत्त्वमूर्ताद्यपरित्यजन्त एव धानाकारेण विक्रियन्ते, न च विकारोऽत्यन्तमेव प्रकृतेर्भेदेन वर्तते, तदन्वयवद् दशासु सुवर्णाङ्गुलीयकादिवत्, नाप्येकान्तेन भेद', संज्ञाप्रयोजनादिप्रतिनियमात्, तथा कदाचित् परिणामिपरिणामयोराधाराधेयवि[4]वक्षाया व्यावहारिक्या भेदप्रधानायामस्मिन् परिणामिनि स्थित्यशे रूपादिपिण्डादयः परिणामाः सन्ति भेदान्तरकल्पनया, तथाऽऽत्मनि चैतन्यम्, आत्मा तु ज्ञानाद्याकारेण परिणममानोऽसत्यपि भेदे

---

१ ' द्वौ पर्यवौ द्विगुणितौ लभते तु एकस्मिन् द्रव्ये । २ तत् तथा जानाति जिन अपर्यये ज्ञानं नास्ति ।
३ द्रव्यप्रभवाश्च गुणा, न गुणप्रभवाणि द्रव्याणि ।
४ ' विवक्षया ' इति क पाठ ।

भेदेन व्यवन्हियते चैतन्यमात्मनीति । एव सैव पुद्गलद्रव्यजातिः स्वरूपमजहती समासादित-तत्तद्गुणविशेपरूपादिपिण्डादिव्यपदेशे हेतुरित्यतः कथञ्चिद् भेदाभेदस्वरूप गुणपर्यायवद् द्रव्यमुच्यते, तथा धर्माधर्माकाशजीवद्रव्याण्यपि गुणपर्यायवन्ति भावयितव्यानि प्रागभिहित-क्रमेण, द्रव्य हि भव्य योग्य सहक्रमभुवां गुणपर्यायाणाम्, अत्र चागुरुलघुप्रभृतयः सहभुवो गुणाः, पर्यायाः क्रमभुवः, पुनर्गतिस्थित्यवगाहज्ञानदर्शननारकादयो गुणपर्यायाः पूर्वमेव भाविता इति ॥ ३७ ॥

एव गुणपर्यायपरिणामि द्रव्यलक्षणमिति प्रपञ्चे निर्णीते पर आशङ्कते—धर्माधर्मादीनि द्रव्याणि पञ्च स्वपरिणामलक्षणगुणपर्यायात्मकानि व्यावर्णितविविधोपकाराणि प्रदर्शितानि, तत्र कालस्यापि पूर्वमुपकारो वर्णित एव वर्तनादिगुणपर्यायलक्षणः, स च कालो द्रव्य-मित्येव न पूर्वं नाधुना व्याख्यातः, न चोपकारकमन्तरेणोपकारः समस्ति शक्य वक्तुम्, वर्तनादिरुपकारः सोपकारकः स्थित्यादिवदुपकारत्वात्, तत् किमयं स्मृतिप्रमोपो युष्माक येन विविक्तोपकाराधारः कालो द्रव्य नोक्तः ? आहोस्विद् धर्मादिद्रव्यपञ्चकसाध्य एवायं वर्तनादिव्यापार इति विरचितप्रश्ने श्रोतरि सिद्धसाध्यतोद्विभावयिषाद्वारेण सूरिराह—

कालस्य द्रव्यत्वम्

## सूत्रम्—कालश्चेत्येके ॥ ५–३८ ॥

टी०—विशिष्टमर्यादावच्छिन्नोर्ध्वाधोऽर्धतृतीयद्वीपाभ्यन्तरवर्तिजीवादिद्रव्यैः परिण-मद्भिः स्वत एव कल्पते गम्यते ग्रथ्यतेऽपेक्ष्यते कारणतयाऽसाविति कालोऽपेक्षाकारणम्, वलाकाप्रसवे गर्जितध्वनिवत्, पापविरतौ वा प्रबोधवत्, चशब्दो द्रव्याकर्षणार्थः, कालश्च द्रव्यं पष्ठ भवति, इतिशब्द एवशब्दार्थे, एवमिति युक्त्यभिधानेन प्रकारान्तरेण च न निर्यु-क्तिक द्रव्यत्वमाचक्षते कालस्य, एके इत्यसहायार्थ एकशब्दः, एकस्य नयस्य भेदलक्षणस्य प्रतिपत्तारः तदुपयोगानन्यत्वादेकेऽनपेक्षितद्रव्यास्तिकनयदर्शनाः कालश्च द्रव्यान्तर भवती-त्याचक्षते । एतदेव भाष्येण सोपपत्तिक स्फुटयति—

भा०—एके त्वाचार्या व्याचक्षते–कालोऽपि द्रव्यमिति ॥ ३८ ॥

टी०—एके त्वाचार्या इत्यादिना । एके नयवाक्यान्तरप्रधाना विशेपेणाचक्षते–व्यक्ती-कुर्वन्ति युक्त्या, परापरप्रत्ययाभिधाने तावदत्यन्तप्रसिद्धत्वान्निर्निमित्ते नाभ्युपगन्तुं शक्ये, यच्चानयोर्निमित्त स कालः, तद्यथा–युवस्थविरयोः, सिद्धे परत्वापरत्वे देशकृते परापरदेशयो-गात् । अथ दृष्टोऽपरदेशयुक्ते त्वपरस्मिन्नपि स्थविरे परप्रत्ययः पराभिधान च, तथैव च परदेशसयोगात् परस्मिन्नपि यून्यपरप्रत्ययोऽपराभिधान च, तावेतौ व्यतिकरस्वभावावभि-

१ 'सहजक्रम' इति क-पाठ । २ 'दृष्टोऽर्वागपर॰' इति क-पाठ ।

धानप्रत्ययौ यन्निमित्तौ तत्कारणमस्ति कालद्रव्य, कालापेक्षे परत्वापरत्वे तन्निमित्ते च प्रत्ययाभिधाने प्रादुर्भवतः परमपरमिति, तथा युगपदयुगपदिति यन्निमित्ते प्रत्ययाभिधाने स कालः, निमित्तविशेषे हि प्रत्ययविशेषः सिद्ध्यत्यभिधानविशेषश्च, शुक्लकृष्णादिवत् । दृष्टश्चाय दिग्देशकारणकार्यकर्तृव्यतिरेकेण प्रत्ययो युगपदयुगपदिति, स चाय नानिमित्तो भवितुमर्हति, यच्च निमित्तं स कालः । इदमुक्त भवति—तुल्यकार्येषु कर्तृषु साधारणकर्तृकेषु च कार्येषु पृथक् पृथग् व्यवस्थितेषु कृतं क्रियते कर्तव्यमित्येतस्मिन् निरूढे कर्तृकर्तव्यभेदे च सति युगपदयुगपच्च कृत क्रियते कर्तव्यमित्येतमवधिं कृत्वाऽभिधीयते, यतः सोऽर्थोऽन्यः कालसञ्ज्ञः, कृतादीनां यौगपद्यायौगपद्येऽन्यनिमित्तासम्भवात्, न चानिमित्तमेतदभिधानम्, तथा समानकार्यावस्थानलक्षणेषु कर्मसु कर्तरि च व्यवस्थिते यत एतद् भवति चिर क्षिप्रमिति सोऽन्योऽर्थः कालः, न चाकस्मादय प्रत्यय', तस्मात् यत्सद्भावे भवत्येष प्रत्ययो यदभावे च न भवति स कालः । तुशब्दो विशेषपरिग्रहार्थः, स च विशेषो भेदप्रधानो नयः, तद्बलेन कालोऽपीति, अपिशब्दश्चशब्दार्थः, कालश्च द्रव्यान्तरमागमे निरूपितमिति कथयन्ति—"कति ण भंते ! दव्वा पण्णत्ता ? गोयमा ! छ दव्वा पण्णत्ता, त जहा–धम्मत्थिकाए, अधम्मत्थिकाए, आगासत्थिकाए, पुग्गलत्थिकाए, जीवत्थिकाए, अद्धासमए" ॥ विनिवृत्तौ वा तुशब्दः, कस्य व्यावर्तकः? धर्मास्तिकायादिपञ्चकाव्यतिरिक्तकालपरिणतिवादिनो द्रव्यनयस्येति, एव कालोऽस्ति, स चापेक्षाकारणम्, तथा ह्यःश्वोऽद्यादीनि कालवचनानि स्वरूपविज्ञानव्यतिरिक्तमुख्यबाह्यार्थनिबन्धनानि असमासपदत्वाच्छुद्धैकपदत्वाद् रूपशब्दवत्, तथा ह्यआदीनि कालवचनानि यथार्थानि यथाभ्युपगममासैस्तथाऽभिधीयमानत्वात्, प्रमाणावगम्य. प्रमेयोऽर्थ इत्येवंविधवचनवत् । एव च सति तद्भावपरिणामलक्षणसूत्रसमुपनीतैकवाक्यभावस्योत्पादव्ययध्रौव्ययुक्त सद्(सू०२९) गुणपर्यायवद् द्रव्यम्(सू० ३७)इत्येतल्लक्षणसूत्रद्वयस्याशेषपदार्थव्यापित्वेन कालस्यापि सत्त्वद्रव्यत्वपरिणामित्वधर्मसद्भावः सिद्धः ॥ ननु च कालो नामाविभागी परमनिरुद्धः समय एवैकः समुच्छिन्नपूर्वापरकोटिः, अत एव चास्तिकाय इति नेष्टः, प्रदेशरहितत्वात्, तस्य च प्रागभावप्रध्वसाभावावस्थे असत्यावेव वर्त्स्यद्वृत्तशब्दाभिधेये, ततश्चोत्पादव्ययध्रौव्ययोगिता कुतः? कुतो वा गुणपर्यायवद्द्रव्यता कालस्येति ?॥ अत्रोच्यते—जिनवचनमनेकनयशतविभङ्गवृत्तिव्यनुस्यूतसकलवस्तुभूमिव्यापि प्रधानोपसर्जनीकृतेतरेतररूपद्रव्यपर्यायोभयनयावविभाग. परमनिरुद्धः समय एको निष्प्रदेशः सोऽपि द्रव्यपर्यायावबद्धवृत्तिरेवेति, द्रव्यार्थरूपेण प्रतिपर्यायमुत्पादव्ययधर्माऽपि स्वरूपानन्यभूतक्रमाक्रमभाव्यना-

कालद्रव्यस्य पार्थक्यम्

काले उत्पादादिमत्ता लम्भि न क्वचिदेकान्तेन प्रतिष्ठते, प्रथितमेवैतत्, यतः योऽपि ह्यसाव-

१ कति भदन्त ! द्रव्याणि प्रज्ञप्तानि ? गौतम ! षड् द्रव्याणि प्रज्ञप्तानि, तद्यथा—धर्मास्तिकाय, जीवास्तिकाय, आकाशास्तिकाय, पुद्गलास्तिकाय, जीवास्तिकाय, अद्धासमयः ।

द्यपर्यवसानानन्तसङ्ख्यपरिणामपर्यायप्रवाहव्यापिनमेकमेवात्मानमातनोति, अतीतानागतवर्तमानावस्थास्वपि कालः काल इत्यविशेषश्रुतेः सर्वदा ध्रौव्याशावलम्बनात् सामान्यपरमार्थ एव, अतः सन्नेव न कदाचिदप्यसन्, स एव ह्यःप्रभृतिपर्यायैरुत्पादव्ययस्वभावैः प्रतिपर्यायमाघ्रातस्वरूपत्वादाविर्भावतिरोभावानुभवन् विनाशीति, तद्यथा—श्वोभावेन विनश्याद्यत्वेन प्रादुर्भवति, अद्यत्वेनापि विनश्य ह्यस्त्वेनोत्पद्यते, कालत्वेन तु श्वोऽद्यह्यःपर्यायेषु सम्भवित्वादन्वयरूपत्वाद् ध्रुव एव, ततो य एवोत्पद्यते स एव विनश्यति द्रव्यार्थतः स एवावतिष्ठते अनन्यत्वात् सर्वदाऽपि, तथा य एव विनश्यति स एवोत्पद्यतेऽवतिष्ठते चेत्युत्पादव्ययध्रौव्याण्येकाधिकरणानीति, न हि श्वोऽद्यादय उत्पादविनाशाः कालध्रौव्यमन्तरेण, निर्बीजत्वान्निराधारत्वात् खपुष्पवत्, नापि कालध्रौव्य ह्यःप्रभृत्युत्पादविनाशावन्तरेण, अपरिणामित्वाद् व्योमोत्पलादिवदेव। तस्मादेव निरूपिते वृत्तो वर्त्स्यति च द्रव्यार्थत्वेन कालः सद्भिः स्वपर्यायैरामृष्टो विवक्षित उपनीतोऽस्तीति भावितमेव ॥ पर्यायार्थतया त्वत्यन्तविविक्तरूपत्वात् पर्यायाणा प्रत्युत्पन्नमात्रविषयत्वादतीतानागतयोरभावादेव न वृत्तो नापि वर्त्स्यन्निति, तेन प्रकारेणासत्त्वम्। अतः स्यात् सच्च स्यान्नास्तित्वमिति व्यवस्थानात् सन् गुणपर्यायवाश्च कालः, एष च निर्वर्तकहेतोः कर्मणः कालोऽपेक्षाकारण मनुष्यलोके प्रत्यक्षलिङ्गः, तानि च लिङ्गानि प्रतिनियमवर्तीनि वर्षोष्णशीतवाताशनिहिमतडिदभ्रगर्जितोल्काङ्कुरकिसलयपत्रफलहरितप्रसूनोदयप्रवासताराग्रहचक्रक्रमादीनि, तथा प्रयोगोऽपि—प्रतिनियतव्यवस्थाभाविनो वर्षादिवनस्पत्यादिपरिणामा यथास्व परिणामिकारणव्यतिरिक्तापेक्षाकारणद्रव्यान्तरवृत्तिसापेक्षप्रादुर्भावाः, असन्ततैकरूपपरिणामत्वे सति प्रतिनियतव्यवस्थयोत्पद्यमानत्वात्, तदानीमात्मलाभत्वात्, तद्भावमापाद्यमानत्वाद्, बहिःप्रकाशापेक्षिरूपान्तरविनिश्चयाभिमुखीभूतचक्षुरिन्द्रियविज्ञानवत्, स्वसमये वा धर्माधर्मद्रव्योपकारजनितजीवपुद्गलगतिस्थितिवत्, अर्धतृतीयद्वीपव्यापित्वेऽपि समयस्य भोगभूमिषु नास्ति किञ्चित् काललिङ्गं, व्यवस्थितपरिणामत्वात्, यतः सम्भवतामर्थाना स्वयं स्वभावेन कालोऽपेक्षाहेतुरुक्तः, न निर्वर्तक इति। एव तर्ह्यसम्भविलिङ्गोऽपि भोगभूमिषु यथाऽस्ति कालस्तथाऽर्धतृतीयद्वीपक्षेत्राद् बहिरपि किमिति नाभ्युपगम्यते ? अपि च—वर्तनं तत्रास्ति परत्वापरत्वादिलिङ्गं च, प्रत्यक्षदृश्यमानकाललिङ्गत्वाद् भरतादिक्षेत्रवत् स्यात् तत्र काल इति, अत्रोच्यते—सत्यामपि तत्र भावाना वृत्तावविशेषेण तस्याः काललिङ्गत्वाभाव इत्यसिद्धता हेतोः। नहि सर्वा वृत्तिः कालापेक्षा। यत्र तु कालस्तत्रासौ वर्तनाद्याकारेण परिणमत इति नियमः। कदाचिद् वा शङ्केत परः—बाह्यद्वीपेषु वृत्तिर्भावाना कालापेक्षा वृत्तिशब्दवाच्यत्वात् प्रयोगनिरपेक्षेहत्यचूतकुसुमवृत्तिवदिति, एतदप्ययुक्तम्, अलोको हि सम्प्रति विद्यमानत्वाद् वर्तते, न च तत्र कालोऽस्तीत्यनैकान्तिकत्वात्, समयवृत्त्या वाऽनेकान्तः,

भाववृत्तौ कालस्यापेक्षिता

१ 'नन्तरसरय' इति क पाठ। २ 'वर्त्स्यति नैतेन इति क पाठ। ३ 'परव्यक्त इति प्रत्यन्तरे' इति ग-टी-पाठ। ४ 'शब्दावाच्यत्वात्' इति क पाठ। ५ 'वाऽनैकान्त' इति क-ख पाठ।

तस्मान्मानुषलोक एव कालः, स च परिणामी, न पुनरेक एव विच्छिन्नमुक्तावलीमणिवदविद्यमानपूर्वापरकोटिर्वर्तमानः समयोऽभ्युपेयते, निरन्वयसमयोत्पादविनाशप्रसक्तेः, एकनयावलम्बित्वं चैवं स्यात्, अतोऽनर्पितद्रव्यनयमतानुसारिभिः सन्ततिपक्षप्रतिज्ञानाद् विद्यमानतैव पूर्वोत्तरसमययोः, वर्तमानसमय एवोत्तरसमयरूपेणोत्पद्यते तथापरिणामात्, नापूर्वमुत्पद्यते खपुष्पादि, नापि निरन्वयमेव किञ्चिद् विनश्यति कार्यत्वात् तत्सन्तानपतितत्वादुपान्त्यसन्ताननिरूपत्वात्, न पुनः सर्वथैवोद्भवविनाशौ निराधारावेव, ध्रौव्यं तयोराधारस्तस्मिन् सति तयोर्भावादिति । यच्च परत्वापरत्वादि काललिङ्गमभ्यधायि प्राक् तदपि नयान्तराभिप्रायादेव, अन्यथा तु स्थितिविशेषापेक्षे हि परत्वापरत्वे, षष्टिवर्षाद् वर्षशतिकः परः, अपरः षष्टिवर्ष इति, स च स्थानविशेषः षष्टिवर्षाणां शत वर्षाणामिति स्थितेरेव, सा च सत्त्वापेक्षा, अस्तित्वादेव भावानाम्, अस्तित्वं चानपेक्षमित्युक्तम्, तस्मात् कालापेक्षे परत्वापरत्वे न भवतः, यौगपद्यमपि कर्तृषु व्यवस्थितं तेषामेव कर्तॄणां कांश्चित् क्रियाविशेषानपेक्षते, न कालम्, न च ते क्रियाविशेषास्ताभ्यः क्रियाभ्योऽत्यन्तमेव नाना भवितुमर्हन्ति, यदा तु काकतालीयेनैकः कर्ता तथाविधक्रियामापद्यतेऽन्योऽपि कर्ता तथैव तत्क्रियापरिणतस्तदा युगपदिति व्यपदेशः, एवमयुगपदित्यपि भावनीयम् ॥ तथा चिरक्षिप्रयोरेष एव प्रपञ्चः, ते च गतिविशेषापेक्षे, गतिश्च परमाण्वादिद्रव्यप्रतिबद्धेति ॥ अथ कस्मादादावेकनयालम्बनेन सूत्रार्थमुपक्रम्य पुनर्नयद्वयेनोपसहरति भवानित्याक्षिप्तेऽभिधीयते–विविक्तार्थसूत्रार्थदर्शनार्थत्वात्, आर्षं हि षष्ठ कालद्रव्यमितरद् द्रव्यविविक्तं दर्शयत्येकनयप्रवृत्तेः[1] । न च जैने प्रवचने कश्चिदेको नयः समस्तवस्तुस्वरूपं[2] प्रतिपादयितुं प्रत्यलः, यतस्तत्प्रतिद्वन्द्विनयानुसारि सूत्रमपरमागमेऽस्ति–
"[3]किमिदं भंते ! कालोत्ति पवुच्चति ? गोयमा ! जीवा चेव अजीवा चेव"[4] । इदं हि सूत्रमस्तिकायपञ्चकाव्यतिरिक्तकालप्रतिपादनाय तीर्थकृतोपादेशि, जीवाजीवद्रव्यपर्यायः काल इति सूत्रार्थः, कलनं कालः–प्रतिविशिष्टपर्यायोत्पादसङ्ख्यानम्, कल्यते वाऽनेन वस्त्विति कालः, स च वर्तनादिरूपो द्रव्यस्यैव पर्यायः[6], तत्र स्वयं सद्भावेन वर्तमानमर्थं या प्रचोदयति वर्तस्व वर्तस्व मा न वर्तिष्ठाः हेतुमण्णिचि "ण्यासश्रन्थो युच्" (पा० अ०३, पा० ३, सू० १०७) इति स्त्रीलिङ्गे भावे वर्तना क्रिया, सा च वर्तितुर्भावादनर्थान्तरं कालस्तत्परिणामत्वात्, द्रव्यमेव काल इति कर्मधारयवृत्तिर्द्रव्यार्थाभेदविवक्षायाम्, नहि वर्तनादिक्रियाभ्यो भिन्नं द्रव्यमस्ति, एकस्यापि समयस्य प्रतिद्रव्यमभेदेन-वृत्तत्वादान-

परापरत्वादे स्थितिविशेषापेक्षिता

कालस्य पर्यायता

१ 'यतो वतमान' इति क-ख-पाठ । २ 'प्रवृत्तेः' इति क-पाठ । ३ 'समस्तवस्तु' इति क-पाठः ।
४ किमिद भदन्त ! काल इति प्रोच्यते ? गौतम ! जीवाश्चैव अजीवाश्चैव ।
५ "समयाइ वा आवलियाइ वा जीवाति या अजीवाति या पवुच्चइ" इति पाठस्तु स्थानाङ्गे ( सू० ९५ ) ।
६ 'द्रव्यस्यैव पयायः' इति क-ख-पाठ ।

न्त्यम्, द्रव्यं च द्विविधं जीवाजीवात्मकत्वात्, तस्माज्जीवाजीवाः समयावलिकादिभेदवाच्याः, तत्परिणतिरूपत्वात्, द्रव्यास्तिकस्य हि द्रव्य द्रव्यार्थतामात्रमेकमभिन्न सर्वव्यापि, तथाऽत्यन्तमपास्तव्यतिरेकम्, अन्वयमात्रसङ्ग्राहिणः कालसामान्यमेकमेवोपचरितविशेषम्, अतश्चेतनाचेतनद्रव्यविषया वर्तना सादिसपर्यवसितादिभेदेन चतुर्विकल्पा सा द्रव्यस्य कालः सुरसिद्धभव्याभव्यस्कन्धानागतातीतव्योमादिनिदर्शनसाध्यः, अद्धाकालस्यापि सूर्यादिक्रियानिशिष्टत्वान्न द्रव्यव्यतिरेकित्वम्, यतो यदाकाशखण्डममुष्णांशुना स्वयमंशुभिश्च सयुक्त तस्याऽहरिति नाम, यदन्यत् सा रात्रिरिति, तस्याहोरात्रस्य परमसूक्ष्मोऽत्यन्तविच्छेदः कश्चिदविभागी भागः समय उच्यते। एतत्प्रचयविशेषाश्चावलिकादयः। सोऽयमद्धाकालः समयादिः समयक्षेत्र प्रतिबद्धो द्रव्यकालान्न व्यतिरिच्यते, एवमेष नयः प्रथमोपन्यस्तनयप्रत्यनीकतया प्रवृत्तः सकलवस्तुसद्भावप्रतिपादनायाक्षम एवेत्युभयनयसामग्रीप्रतिपाद्यवस्तुस्वभावो निरवद्यः, सूत्रकारस्याप्येष एवाभिप्रायः सूत्रेणैकीयमतमुपन्यस्यतः, इत्येके इत्थमाचक्षतेऽन्ये त्वन्यथेति ॥ सम्यग्ज्ञान पुनः सामग्र्यामेव सम्पद्यते, न प्रकारान्तरेणापीति, एवं प्रसिद्धेन कालद्रव्येणानेकरूपो व्यवहारः प्रतीयते वृत्तवर्तमानवर्त्स्यद्विषय इति ॥ ३८ ॥

इह (सू०३८) द्रव्यलक्षणाधिकारेऽभिहितम्—कालश्चेत्येके इति द्रव्यत्वप्रतिपिपादयिषया, कालस्यास्य च द्रव्यत्वे सत्युपकारेण भवितव्यमित्युपकारो वर्तनादिलक्षणः प्रथममेव प्रतिपादितः, तथा धर्मादिद्रव्याणामसङ्ख्येयाः प्रदेशाः, तथा धर्माधर्मयोरित्यादिना सूत्रकलापेन प्रदेशपरिमाणमभिहितम्, अस्य तु कालद्रव्यस्य नोक्त प्रदेशपरिमाणम्, तत्र तद्विवक्षया त्विदमुच्यते—सोऽनन्तसमयः। अथवा एकान्तेन कालद्रव्यमेकमपरिणामीच्छन्ति केचित्, तत्प्रतिक्षेपार्थमिदमाह—

कालस्य समया

## सूत्रम्—सोऽनन्तसमयः ॥५-३९॥

टी०—स इत्यनन्तरसूत्रप्रतिपादितो द्रव्यविशेषः कालाख्योऽनन्तसमयः परिणामी प्रतिपत्तव्यः, तत्राविभागी यः कालः परमनिरुद्धश्च समयः स कालावयव इत्यर्थः, स च न भाक्तः, किं तर्हि ? पारमार्थिकः, अनन्तशब्दः सङ्ख्यावाची, अनन्ताः समयाः-पर्याया भेदा यस्यासावनन्तसमयः। उक्तं ( सू० ३७)-गुणपर्यायवद् द्रव्यलक्षण, सर्वं च द्रव्यमनन्तपर्यायमिष्यते, ते च पर्यायाः स्वपरभेदभाजः, यथैकस्याणोः शुक्लसुरभितिक्तादयस्तदन्यद्रव्यवर्तिनश्च संस्थानवर्णादयः, तथैकस्य कालद्रव्यस्यानन्तप्रदेशस्यान्येऽपि सत्त्वज्ञेयत्वद्रव्यत्वकालत्वादयोऽर्थपर्याया वचनपर्यायाश्चानन्ता एव, वर्तनादिलक्षणस्यातीतसाम्प्रतानागतशब्दवाच्याः परिणामविशेषा इति, एनमेवार्थं भाष्येण स्पष्टयति—

भा०—स चैष कालोऽनन्तसमयः। तत्रैक एव वर्तमानसमयः, अतीतानागतयोस्त्वानन्त्यम् ॥ ३९ ॥

---

१ ' सर्वं एष ' इति क-ख पाठ ।

टी०—स चैष काल इत्यादि । स इति प्रक्रान्तपरामर्शादेष इत्यनेन सूत्रेणानुसन्धीयते कालः, चशब्दो हेतौ, यस्मादनन्तसमयस्ततः परिणामीति, अनाद्यनन्तभाविन्यां समयपरम्पराया सङ्ख्यान प्रत्यनिर्दिष्टलक्षणाया विशिष्टसङ्ख्यानिरूपणायेदमाह—अनन्तसमय इति । सप्रदेशः कालो द्रव्यत्वादात्माकाशादिवत्, ततश्च परिणाम्यपि प्रदेशवत्त्वात् तद्वदेवेति, तत्रेति तस्मिन् कालद्रव्ये वर्तमाने, एक एव प्रदेशः समयलक्षणः तिर्यगर्धतृतीयद्वीपसमुद्रद्वयव्यापी ऊर्ध्वमधश्चाष्टादशयोजनशतप्रमाणः कालच्छेदेनानवयवः क्षेत्रच्छेदेनादेशोऽपि कल्पितावयवो भावभेदेन वा सावयवः, शेषद्रव्योपकार्योपकारकत्वेन स्वगतेन चागुरुलघुलक्षणेन परिणामेनेति, न चायमस्माकमेकान्ताग्रहोऽनवयव एवेति, किन्तु विभज्याविभज्यार्थस्य व्याकरणादर्पितानर्पितसिद्धेः कालतो द्रव्यतश्चार्पितोऽनवयवः, तस्योत्पन्नानन्तरविनश्वरत्वात्, एकस्य समयस्य कालकृता देशा न सन्त्येव, यथा कालकृतदेशैरनवयव एव द्रव्यकृतदेशैरपीति, क्षेत्रतो भावतश्च सावयव एव, उत्पद्यमानसमयपरिणामिकारणमतीतसमयकार्यं वर्तमानावस्थामनुभूय वृत्तपर्यायमनुभविष्यति, प्राप्तवर्तमानत्वाच्च वर्त्स्यत्यपीत्येकैकसमयस्य द्रव्यता, अतः प्रदेशावयवबहुत्वात् कायव्यपदेश्योऽपि, कालद्रव्यप्रदेशावयवैर्नास्ति कायता, व्यवहारस्तु रूढ्याऽस्तिकायैः पञ्चभिरेव प्रवचने, न चैतावतैवास्यास्तिकायताऽपह्नोतु शक्या, आगमे तु क्वचित् प्रदेशे नित्यतया व्यवहारः, क्वचिदनित्यतया । न चैकान्तेन नित्यत्वमनित्यत्वं वा युक्तमित्यलं प्रसङ्गेन । प्रकृतमुच्यते—वर्तमान एकः समय इति निरूप्यैवमतीतानागतयोर्निरूपणायेदमाह—समयराश्योः कियती सङ्ख्येति ॥ अतीतानागतयोस्त्वानन्त्यम् ॥ अतीताः सपर्यवसाना वर्तमानावधिकाः सन्तत्याऽनाद्या इत्यतोऽनन्ताः, तथाऽनागताः साद्या वर्तमानावधिकाः पर्यवसानशून्याः सन्तत्यैव, अनन्तस्य भाव आनन्त्य-सङ्ख्याख्यो गुणः, स च न सङ्ख्येयसङ्ख्या नासङ्ख्येयसङ्ख्येति, किं तर्हि ? अनन्तसङ्ख्यैव, तुशब्दः समुच्चये । अतीतोऽनागतश्च समयराशिरनन्त इति, सा चातीताद्धा अनागताद्धा च शेषकायेभ्योऽल्पबहुत्वचिन्तायां पृथगेवोक्ता, न पञ्चास्तिकायधर्मत्वेनेति, अभव्येभ्योऽनन्तगुणाः सिद्धाः, सिद्धेभ्योऽतीतसमयराशिरसङ्ख्येयगुणः, अस्माद् भव्यास्त्वनन्तगुणाः, भव्येभ्योऽनन्तगुणाः वर्त्स्यत्समयाः, इत्येतदल्पबहुत्वमस्तिकायपञ्च( त्व एव ) कालद्रव्यस्य घटत इति ॥ ३९ ॥

कालेऽवयवविचार

**भा०—अत्राह—उक्तं( अ० ५, सू० ३७) भवता—गुणपर्यायवद् द्रव्यमिति । तत्र के गुणा इति ? । अत्रोच्यते—**

टी०—अत्राह—उक्तं भवतेत्यादिना सम्बन्धमावेदयति । द्रव्याधिकारसम्बन्धेन कालद्रव्यं सपर्यायमभिधाय गुणपर्यायस्वरूपं निरूपयितुकामो भाष्यकारः परमेव प्रश्नं कारयति ।

---

१ मतीतः समय' इति क पाठ । २ 'भव्य' इति क-पाठ । ३ 'स चा' इति क-पाठः ।

प्रतिपादितं भवता-गुणपर्यायपरिणामि द्रव्यम्, तत्र के गुणा यैस्तद्द्रव्यं गुणवदिति दिश्यते ? गुणग्रहणाच्च पर्याया गृहीता एवेत्यतो न भेदेन प्रश्नः, प्राक् च प्रतिपादितमेव गुणाः पर्याया इति चैकमित्युक्ते आचार्य आह—अत्रोच्यत इति । गुणस्वरूपमभिधीयते, यादृशा द्रव्यगुणास्तादृशाः प्रतिपाद्यन्त इति सङ्गिरते गुरुः ॥

## सूत्रम्—द्रव्याश्रया निर्गुणा गुणाः ॥ ५-४० ॥

टी०—स्थित्यंशो द्रव्य स आश्रयो येषां परिणामि कारणं परिणामविशेषाणां गुणानां ते द्रव्याश्रयाः, परिणामिपरिणामलक्षण आश्रयाश्रयिभावो नाधाराधेयलक्षणः, कुण्डबदरादिवत् । न च समवायलक्षणः सम्बन्धो युज्यते द्रव्यगुणानामनुपपत्तेः । अस्तु तावद् द्रव्यगुणाना समवायलक्षणः सम्बन्धः । समवायस्य गुणानां च यः सम्बन्धः स किं समवायोऽथ सम्बन्धान्तरम् ? । यदि समवायः, तस्य तेषा च किमभिधानः सम्बन्ध इति । समवायश्चेत्, अनवस्था, सम्बन्धान्तरमिति चेत्, आगमविरोधः स्पष्टतरमुच्यते, समवायाख्यः सम्बन्धः समवायिनोर्यदि वर्तते, ततः सयोगवृत्त्या समवायवृत्त्या वा वर्तेत ? सयोगवृत्त्या तावन्न वर्तते, कुतः ? अद्रव्यत्वाद्, द्रव्यविषयो हि सयोग इष्यते, न पुनर्द्रव्यगुणविषयः । अथ समवायवृत्त्या वर्तते तत्र समवायस्ततो यद्यन्यसमवायवृत्त्या सोऽपि वर्तते ततोऽनवस्थोद्ग्राहणीया ॥ एवमुक्ते वार्तिककारेणोक्त—समवायो न क्वचिद् वर्तत इति ब्रूमः, अनाश्रित एवासौ स्वतन्त्रः सम्बन्धो भवतीत्येतदप्ययुक्तम् । यदि द्रव्यगुणयोर्नाश्रितः कयाचिद् वृत्त्या न तर्हि द्रव्यं गुणैः सम्बद्ध तेन समवायाख्येन सम्बन्धेनानाश्रितत्वाद् द्रव्यगुणयोर्घटपटादिवत्, घटपटयोर्हि परस्परेण नास्ति समवायलक्षणः सम्बन्धः, तस्माद् द्रव्य परिणमते, गुणपर्यायाः परिणामविशेषाः, ते च गुणा निर्गुणाः । नहि शुक्लघटकपालादीना गुणपर्यायाणामन्ये गुणपर्यायाः सन्ति, द्रव्यस्य परिणामिनः शुक्लादिपरिणामो घटकपालसस्थानादिश्च परिणामः, न पुनस्तस्यैव शुक्लादेरन्ये शुक्लादयः कुम्भादिसस्थानस्य वाऽन्ये सस्थानादयस्तत्परिणामा विद्यन्ते, इत्यतो निर्गुणाः । एनमेवार्थं भाष्येण स्फुटयति—

भा०—द्रव्यमेषामाश्रय इति द्रव्याश्रयाः, नैषा गुणाः सन्तीति निर्गुणाः ४० ॥

टी०—द्रव्यमेषामाश्रय इत्यादि भाष्यम् । द्रव्य भव्य योग्यं युगपदयुगपद्भाविन्याः गुणपर्यायपरिणतेः स्थितिः सामान्यमेषामुत्पादव्ययलक्षणाना ज्ञानादिशुक्लादिघटकशकलादीनामाश्रयः, परिणाम्यर्थो द्रव्य, तद्धि ज्ञानशुक्लादिघटकादितया परिणमते, भूयस्तेनाकारेण विनिवर्तते, द्रव्यतया व्यवतिष्ठते, तदेषामुपघ्न इति द्रव्याश्रयाः । इतिशब्द एवशब्दार्थे । एवशब्दस्त्ववधारयति, परिणामिपरिणामलक्षण एवाश्रयाश्रयिभावो न प्रकारान्तरेण, परिणामिपरिणामयोश्च द्रव्यपर्यायनयद्वयापेक्षयैकत्वान्यत्वभजनाविधिरुद्ग्राह्य इति । त भजनाविधिमुपन्यस्य-

१ ' णामोऽतस्तस्यैव ' इति क ख-पाठ ।

